BIBLIOTHECA INDICA:
A
COLLECTION OF ORIENTAL ORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1361.

# सटीक-कविकल्पलता ।

# KAVI-KALPA-LATĀ

## A WORK ON RHETORI BY DEVESVARA
## TOGETHER WITH HIS O COMMENTARY.




EDITED BY
PANDIT SARAT CHANDRA SASTRI.

FASC. I.

CALCUTTA
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1913

# कविकल्पलता ।



श्रीमता देवेश्वरेण विरचिता,

तेनैव कृतया टीकया च सहिता,

श्रीशरच्चन्द्रशास्त्रिणा
सम्पादिता ।

वङ्गदेशीयासियाटिकसोसाइटिनामधेय-
समाजानुमत्या

कलिकातानगर्य्यां

वाप्टिष्टमिशन-यन्त्रे मुद्रिता ।

शकाब्दाः १८३४ ।

# कविकल्पलता ।

ॐ नमो गणेशाय[1] ।

गङ्गावारिभिरुक्षिताः फणिफणोरुत्पल्लवास्तच्छिखा-

रत्नैः कोरकिताः सुधांशुकलया[2] स्मेरैकपुष्पश्रियः ।

आनन्दाश्रुपरिस्रुताक्षिहुतभुग्धूमैर्मिलद्दोहदा

नाल्पं कल्पलताः फलं ददतु[3] वोऽभीष्टं जटा धूर्जटेः ॥१॥

मालवेन्द्रमहामात्यश्रीमद्वाग्भटनन्दनः ।

देवेश्वरः प्रतनुते कविकल्पलतामिमाम् ॥ २ ॥

प्रतिभाभावितात्मानः कवित्वं के न कुर्व्वते ।

अन्यच कविताधानकुशला विरलाः पुनः ॥ ३ ॥

यदन्यैर्वर्त्म न क्षुण्णं तत्र सञ्चरतो मम ।

पदे पदे प्रस्खलतः सन्तः सन्त्ववलम्बनम्[4] ॥ ४ ॥

ॐ नमोगणेशाय । इदानीं वृद्धजनवर्त्मानुसरणेन निजग्रन्थस्य प्रामाण्यं निदर्शयति ।

---

१ श्रीगणेशाय नमः (A).

२ सितांशुकलया (S).

३ दधतु (S).

४ विचारकाः (S).

कविशिक्षाशतं वीक्ष्य कवीन्द्रान् उपजीव्य च ।
निबद्धेयं मया धीरास्त्वरितश्लोकसिद्धये ॥ ५ ॥
सुवृत्तरम्यस्तवका सदालिपरिशीलिता ।
कविकल्पलता सेयममला परिशील्यताम् ॥ ६ ॥
शब्दश्लेषकथार्थाख्याश्चत्वारस्तवका इह ।
ते चतुः पञ्चषट्सप्तकुसुमैरन्विताः क्रमात् ॥ ७ ॥
तत्राद्यस्तवके[1] छन्दोऽभ्यासः सामान्यशब्दकः ।
वर्णस्थितिरनुप्रासः कुसुमानि यथाक्रमम्[2] ॥ ८ ॥

(५) कविशिक्षाशतेत्यादि । भो धीराः पण्डिता इयं कविकल्पलता मया निबद्धा, किमर्थं? त्वरितं शीघ्रं श्लोकानां सिद्धये सम्पत्तये, किं कृत्वा कविशिक्षाशतं वीक्ष्य, कवयः शिक्ष्यन्तेऽनया इति कविशिक्षा कवित्वोपायग्रन्थस्तेषां शतम् असंख्यातं दृष्ट्वा कवीन्द्रान् कविश्रेष्ठान् उपजीव्य अनुशील्य च तेभ्यः श्रुत्वा कवित्वोपायप्रसरमिति यावत् ।

(६) सुवृत्तेत्यादि । शोभनं यद्वृत्तं पद्यं तेन रम्यः स्तवको ग्रन्थपरिच्छेदो यस्याः सा तथा । सताम् आलिः श्रेणी तया परिशीलिता समभ्यस्ता या सा तथा । पक्षे सुवृत्तोऽत्यन्तवर्त्तुलो रम्यः स्तवको गुच्छो यस्याः (सा), सर्व्वदा अलिभिर्भ्रमरैः परिशीलिता अनुसेविता ।

१ तत्राद्ये स्तवके (S). २ यथाक्रमात् (S).

छन्दोऽभ्यासप्रसक्तेऽत्र नेत्रभूते[1] विपश्चिताम्।
कथ्यन्ते केऽपि शब्दा यैश्छन्दो मन्दोऽपि विन्दति ॥ ९ ॥
श्रीर्लक्ष्मीः कमला पद्मालया च हरिवल्लभा।
दुग्धाब्धिनन्दिनी[2] क्षीरसागरापत्यमित्यपि ॥ १० ॥
क्षीरपाथोधितनयेत्येवमेकाक्षरादिकम्।
आदौ साध्यं पदं स्थाप्यं शेषं कुर्य्याद्विशेषणैः[3] ॥ ११ ॥
विशेष्योऽर्थो वर्णाकाराधाराधेयक्रियागुणैः।
साहश्यपरिवाराद्यैः क्रियते सविशेषणैः ॥ १२ ॥

यथा सुधांशुर्धवलोऽतिवृत्तः
क्रान्तान्तरीक्षो[4] हरिणं दधानः।
महत्तमो घ्नन् जनतापहारी
मृगेन्द्रवद्राजति ऋक्षमध्ये ॥ १३ ॥

(११) कविलरचनाप्रकारमाह आदाविति प्रथमतो वर्ण-नीयत्वेनापेक्षितं यत् साध्यं विशेष्यं पदं तदेव स्थापनीयं, शेषं पश्चात् तदेव विशेषणैरुपलक्षितं कुर्य्यात्।

(१२) अमुमेवार्थं प्रपञ्चयति विशेष्योऽर्थ इत्यादि अस्यैवोदा-हरणमाह यथेति सुधांशुश्चन्द्रो राजति कइव मृगेन्द्रवत् सिंहइव सोऽपि ऋक्षाणां भल्लूकानां मध्ये शोभते उभयोर्विशेषणमाह

[1] नेत्रभूता (S). [2] दुग्धाब्धिनन्दना (S).
[3] विशेषणम् (S). [4] क्रान्तान्तरिक्षः (S).

**बन्धुश्चौरः सुहृद् वादी कल्पः प्रख्यः प्रभः समः ।**
**देश्यदेशीयरिपुवाभसोदराद्या इवार्थकाः ॥ १४ ॥**

धवलः शुक्लोऽतिवृत्तोऽत्यन्तवर्त्तुलाकारोऽतिक्रान्तचरित्रश्च क्रान्ता-न्तरौचः प्राप्ताकाशो हरिणं मृगं दधानः पक्षे उत्प्लुत्याक्रान्ता-न्तरीचः मन् हरिणं बिभ्रदित्यर्थः । महत्तमो घ्नन् महान्धकारं नाशयन् पक्षे महत्तमोऽतिमहान्, घ्नन् हिंसात्मक इत्यर्थः । जनतापहारी जनानां तापं तपादिजन्यक्लेशमपहर्त्तुं शीलमस्येति पक्षे जनताया जनसमूहस्य अपहारी अपहर्त्ता चमः । अत्र क्रमेण धवलादिविशेषणपदैर्वर्णाद्याकारादीनामुदाहरणमुक्तम् ॥

(१४) माहात्म्यप्रस्तावे तदभिधायकान् शब्दान् अभिधत्ते बन्धुरित्यादि बन्धुपर्यायास्तेन बान्धवदायादादयः । चौर इति चौरपर्य्यायास्तेन तस्करमोषकारापहारकादयः । सुहृदिति सुहृत्पर्य्यायास्तेन मित्रसख्यादयः । वादीति वादिपर्य्यायास्तेन वावदूक-वदावद-वाचाट-वक्तृ-प्रतिवक्तृप्रभृतयोऽप्यूह्याः । कल्प इति कल्प-प्रत्ययः प्रख्यइति स्वरूपं प्रभ इति स्वरूपं सम इति समानार्थाः समान-सदृश-सदृच-सदृक्-तुल्य-प्रतिमोपमादयः । देश्यदेशीयौ प्रत्ययौ । रिपुरिति रिपुरपर्य्यायास्तेन वैरि-सपत्ना-रि-विद्वेषि-प्रतिमल्ल-प्रत्यनीक प्रतिभटप्रभृतयः । सोदर इति सोदरपर्य्यायास्तेन सगर्भ-सहज-सोदर्य्य-समाभि-सपिण्डादयः । अत्र आदिशब्दान्नेद निन्दकोपहासकानुकारकविडम्बकादयः प्रतिबोद्धव्याः । अत्र केवल शब्दा अभिधावृत्त्यैवार्थमभिदधति । केचित्तु लक्षणावृत्त्या बन्धु-चौरसुहृत्सोदरादयः । तथा च मुख्यार्थबाधे तद्योगे ययान्योऽर्थः

यथेन्दुबन्धुर्मुक्ताश्रीचौरो हारश्रियः सुहृत् ।
कुन्दवादी हंसकल्पः क्षीरप्रख्यो हिमप्रभः ॥ १५ ॥
गङ्गासमोऽजदेशीयः शेषदेश्यः सुधारिपुः ।
बिसाभस्तेजसोराशिः कैलासोदरसोदरः ॥ १६ ॥
कथानगरसर्व्वार्थनित्यकृत्यादिवर्णनैः ।
श्लोकानां हृष्टचेष्टाभिश्छन्दोऽभ्यासक्रमो यथा ॥ १७ ॥
आसीद् दशरथो राजा चत्वारस्तस्य सूनवः ।
रामलक्ष्मणशत्रुघ्नभरता[1] इति विश्रुताः ॥ १८ ॥
ध्वस्तध्वान्तभरं रत्नवेश्मविस्मेररश्मिभिः ।
राजधानी दिनस्येव तत्पुरं द्योतते सदा ॥ १९ ॥

प्रतीयते रूढ़ः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता । एतानेवोदाहरति यथेति बिसाभः बिसं मृणालं तत्सदृशम् अन्यत् स्पष्टम ।

(१९) राजधानी तत्पुरमिति तत्प्रसिद्धं पुरं नगरं तस्य कस्यचिज्जनस्य वा पुरं तत्पुरं द्योतते किम्भूतं तत् रत्नवेश्मनां मणिमयगृहाणां विस्मेरैः प्रकाशमानैरश्मिभिः किरणैर्ध्वस्तध्वान्तभरं निरस्तान्धकारातिशयं केव द्योतते दिनस्य राजधानी । रत्नवेश्मनां किरणैर्निरस्तध्वान्ततया राजधानी यथा दिवसे भाति रात्रावपि तथेदं भातीत्यर्थः सप्तम्यर्थे सम्बन्धमात्रविवक्षया दिनस्येति षष्ठी ।

१ रामलक्ष्मणभरतशत्रुघ्ना इति विश्रुताः (S).

स्थाली भात्यन्नपूर्णेयमर्णोभिः[1] शोभते घटः।
पटः संलक्ष्यते सूक्ष्मः साक्षाल्लक्ष्मीरियं वधूः॥ २०॥
प्रातः कृतश्रमः स्नातोऽर्चितदेवो हुतानलः।
भुक्तान्नः श्रुतसच्छास्त्रः सायं शय्यागृहं ययौ॥ २१॥
पुष्पाणि पाणिदेशेऽसौ कृत्वा क्रीड़ति कामुकः।
ताम्बूलिकोऽत्र ताम्बूलमस्य पश्यार्पयत्यसौ[2]॥ २२॥
तदर्थान्यपदैः स्वान्यश्लोकस्य[3] परिवर्त्तनात।
तत्रैव छन्दस्यभ्यस्येदथच्छन्दोऽन्तरे यथा॥ २३॥
प्रत्यर्थिपृथिवीपालतमोजालदिवाकरः।
नीतिव्रततिपर्ज्जन्यो राजते जगतीपतिः॥ २४॥
प्रत्यनीकावनीकान्तध्वान्तविध्वंसनांशुमान्।
नयवल्लीवनाम्भोदः शोभते भूमिवल्लभः॥ २५॥

(२३) तदर्थेत्यादि यएव पूर्व्वकृतकाव्याभिधेयीकृतधेयीकृतः स एव विवक्षितो वाक्यार्थः। किन्तु पदान्यानि तैः पदैः स्वस्यात्मकृतस्य अन्यकृतस्य वा श्लोकस्य परिवर्त्तनात् परिवृत्तेस्तत्रैव अन्यरचितश्लोकस्य छन्दसि छन्दोऽन्तरे वा अभ्यासं कुर्य्यादित्यर्थः।

१ अम्भोभिः (S).
२ पार्श्वेऽर्पयत्यसौ (S)
३ तदर्थान्यपदैरेव श्लोकस्य (S).

प्रत्यर्थिपृथ्वीहृदयाधिनाथ
ध्वान्तौघविध्वंसनवामरेशः ।
सन्नीतिवल्लीवनवारिवाहो
विश्वम्भराया दयितो विभाति ॥ २६ ॥

दुर्द्धरारिधरणीधरोद्धत
ध्वान्तमण्डलविखण्डनांशुमान् ।
नीतिवल्लीवननूतनाम्बुदो
मेदिनीपरिवृढो विराजते ॥ २७ ॥

यतिभङ्गो नामधातुभागभेदे भवेद् यथा ।
पुनातु नरकारिश्चक्रभूषितकराम्बुजः ॥ २८ ॥
द्विविषद्वन्द्ववन्द्यं वन्दे गोविन्दपदद्वयम् ।
स्वरसन्धौ तु न श्रीशोऽस्तु भूत्यै भवतो यथा ॥ २९ ॥
न स्याद्विभक्तिभेदे भात्येष राजेति कुत्रचित्[1] ।
क्वचित्तु स्याद् यथा देवाय नमश्चन्द्रमौलये ॥ ३० ॥

(२८) नामधातुभागभेद इति । नामानि प्रातिपदिकानि वृक्षप्रक्षादयः शब्दाः, धातव इति क्रियापदानि भवति जयति प्रभृतयोऽनयोर्भागो विभजनं तेन यो भेदो विच्छित्तिप्रकारस्तत्र भागभेदे विशेषे वा । स्वरसन्धाविति स्वरा अचस्तेषां यः सन्धिः संहितकार्य्यं पूर्व्वरूपापादनादिति तत्र ।

१ राजेति वत् क्वचित् (S).

चादयो न प्रयोक्तव्या विच्छेदात् परतो यथा ।
नमः शिवाय कृष्णाय च दानवविनाशिने ॥ ३१ ॥
एकस्वरोपसर्गेण विच्छेदः श्रुतिसौख्यकृत् ।
यथा पिनाकपाणिं प्रणमामि स्मरशासनम् ॥ ३२ ॥
एवं यथा यथोद्वेगः सुधियां नोपजायते ।
तथा तथा मधुरता निमित्तं यतिरिष्यते ॥ ३३ ॥
अबुद्धार्थापि[1] मधुरा मनो हरति भारती ।
तमोनिचयसङ्काशा मञ्जुला[2] देवकोकिला ॥ ३४ ॥

(३२) एकस्वरोपसर्गेणेति एकस्वरो यस्य एवम्भूतो य उपसर्गः प्रादिस्तेन ।

इति प्रथमस्तवके छन्दोऽभ्यासो नाम प्रथमं कुसुमम् ॥

१ अबद्धार्था (A). २ पञ्चमा (S).

सामान्यशब्दाः कथ्यन्ते क्रमादेकाक्षरादयः ।

एकाक्षरम् ।

औ भो हे हि नु नि प्र त्वं ।
वि प्राग् आ सत् सु सं तथा ॥ १ ॥
श्रीकृष्ण भो केशव हे हरे द्राङ्
निष्पीडितारे सुमतिं प्रयच्छ ।
निकाममासेव्य विभासि नु त्वं
सद्योगिनां चेतसि सङ्गतो हि ॥ २ ॥

द्व्यक्षरम् ।

स्फुटं स्फूर्जत् स्फुरत् स्फारं सारं तारं वरं परम् ।
प्राग्र्यं[1] प्राज्यं प्रियं ज्येष्ठं प्रेष्ठं श्रेष्ठं मुहुर्वहु ॥ ३ ॥
कीर्त्यं काम्यं कम्रं कान्तं मञ्जु मङ्क्षु मदन्मिलत् ।
गाढं वाढं दृढं प्रौढं बलत् वल्गत्स्खलत् ॥ ४ ॥
स्वैरं सम्यक् सदा शश्वत् सत्यं नित्यं ध्रुवं द्रुतम् ।
धुर्य्यं वर्य्यं पुनः प्रायः सुष्ठु सद्यो भृशं लसत् ॥ ५ ॥
ननु नाम किल क्रीडन्वल्गत् चारु जवात्[2] खलु ।
श्रीमदुच्चैः[3] शनैर्माद्यद्रङ्गद्रिङ्ग[4] चिरं परि ॥ ६ ॥

(३) स्फुटमित्यादि स्फारं महत्, तारं शुद्धं, प्राज्यं प्रचुरम् ।

(४) कम्रं कमनीयं, मङ्क्षु शीघ्रं, वल्गु शोभनं, सुष्ठु शोभनं, माद्यत् हृष्यत् ।

१ प्राग्र्यं (S). २ यथा (S). ३ प्रोच्चैः (S). ४ गायत् (S).

त्र्यक्षरम्।

झटिति प्रकटं सपदि प्रसभं[1]
निविडं रुचिरं सुभगं प्रचुरम्[2]।
विकसद्विहसद्विचरद्विलसद्[3]
विमलं सकलं बहुलं[4] प्रवलम्॥ ७॥
सर्व्वदा सर्व्वथा सर्व्वतः शीघ्रतः
सत्वरं सन्ततं निश्चितं वेगतः।
उच्चकैरञ्जसा नित्यशः सुन्दरं
पेशलं मञ्जुलं प्रोल्लसद्विस्फुरत्॥ ८॥
प्रोद्दाम विभ्राज दुत्तुङ्ग विस्फूर्ज्ज
दुत्तान शोभाढ्य विस्फार विक्रीड़त्।
सच्छाय सच्छोभ निःशङ्क निःशेष
मित्थं बुधैस्त्र्यक्षरं वै प्रयोज्यम्[5]॥ ९॥

चतुरक्षरम्।

मनोरमं मनोहरं समन्ततः समीहितम्।
वरद्युति स्फुरत्प्रभं महोज्ज्वलं[6] घनच्छवि॥ १०॥

(८) अञ्जसा तत्त्वेन।

१ प्रभृति (S). २ प्रवरं (S). ३ विसरद् (S).
४ वहलं (S). ५ बुधैस्त्र्यक्षराणि प्रयोज्यानि (S).
६ घनोज्ज्वलं (S).

रयादेव जवादेव सर्व्वकालं सुनिश्चितम्।
स्फारशोभं प्रभायुक्तं स्फुरच्छायं श्रियायुतम्[1] ॥ ११ ॥
वराभोगं बहुश्रीकं लसत्कान्ति स्फुरद्यशः।
घनच्छायं झटित्येव शोभायुक्तं विकस्वरम् ॥ १२ ॥

पञ्चाक्षरम्।

प्रवरश्रीकं रुचिरच्छायं स्फुटलक्ष्मीकं बहुलश्रीमत्।
कलयायुक्तं विकसद्रोचिः प्रचुरज्योतिर्द्युतिरोचिष्णु ॥ १३ ॥
विलसच्छवि प्रसरत्प्रभं[2] प्रसरद्रसं सुषमामयम्।
बहुवैभवं रुचिभासुरं कलयान्वितं मलवर्ज्जितम् ॥ १४ ॥
स्फुरितोदयं खचितं श्रिया विकटोच्छ्रयं प्रमदालयम्।
घनविभ्रमं भुवनाद्भुतं वरदीधिति द्युतिसुन्दरम्[3] ॥ १५ ॥

षड़क्षरम्।

अद्भुतवैभवमक्षिमहोत्सव
मुज्ज्वलभातति भूरितरद्युति।

(१२) वराभोगं वरः श्रेष्ठ आभोगः परिपूर्णता यस्य तत्।
(१४) सुषमामयं परमशोभायुक्तम्।
(१५) खचितं व्याप्तं, उच्छ्रय उन्नतिरुद्रेको वा।

१ श्रियान्वितं (S). २ प्रभवत्प्रभं (S).
३ स्फुरद्दीधिति (S).

कान्तिनिकेतनमिद्धतमाकृति
चारुतरच्छवि सुन्दरदीधिति ॥ १६ ॥
मनोहरच्छायमुदञ्चितद्युति
स्फुरत्प्रभाचारु घनश्रिया युतम्।
समुल्लसत्कान्ति विभाविभासितं
निवेश्यमित्यन्तु षडक्षरं पदम्[१] ॥ १७ ॥

अष्टाक्षरम्।

समुल्लसितशोभाढ्यो रोचिर्निचयरोचितः।
चारुचञ्चत्कलाशाली कान्तकान्तिनिकेतनम् ॥ १८ ॥
वल्गुवलद्वपुर्लक्ष्मी महामहिममन्दरम्[२]।
आभासम्भारसंशोभी दीप्तिमण्डलमण्डितः ॥ १६ ॥
प्रभाप्राग्भारसारश्रीरुद्यद्भूयतरद्युतिः[३]।
मनोरमतमच्छायो विभावैभवशोभितः ॥ २० ॥

(१६) दीधिति र्दीप्तिः इद्धतमो दीप्ततमः। उदञ्चितम् उद्गतम्।
(१८) कला नृत्यवादित्रादिलयकौशलम्।
(१८) वलद् उद्गच्छत्।

१ नियोज्यमेवन्तु षडक्षरं पदम् (S).
२ वल्गुवर्णवपुर्लक्ष्मीर्महामहिममन्दिरम् (S).
३ प्रभाप्राग्भावसारश्रीरुद्यद्विभ्रमसद्युतिः (S).

षोडशाक्षरम् ।

चमत्कारकरस्फारप्रभाप्राग्भारभासुरः ।
मनोरमतमक्रीडत्कान्तिमण्डलमण्डितः ॥ २१ ॥
मनोहरतर[1]स्फूर्जदूर्जस्वलकलोज्ज्वलः ।
अत्यद्भुतवपुर्लक्ष्मीक्षोभितक्षितिमण्डलः ॥ २२ ॥
मनोहारितरोच्छ्रायकायच्छायचयान्वितः ।
प्रीतिस्फीतिकरप्रेङ्खत्प्रभासंहतिसंहतः ॥ २३ ॥
विस्फुरद्रश्मिविस्मेरविस्मयाविष्टपिष्टपः[2] ।
नयनानन्दनोद्दामरामणीयकमन्दिरम् ॥ २४ ॥

अवनीतलवर्त्तिदृशाम्
अमृतांशुः सम्मदैककुलगेहम्[3] ।
चित्ताकर्षमहौषधिर्
अधिवासः कान्तिकेतक्याः ॥ २५ ॥

(२१) प्राग्भारः समूहः ।

(२३) स्फीतिकरो वृद्धिकरः ।

(२४) रश्मिविस्मेरो रश्मिप्रकाशः स्मेरशब्दोऽत्र भावप्रधानः । यथा कुन्दाभामलमन्दस्मेरसुधानिन्दितमुखदामन्दमिति शङ्कराचार्य्योक्तिः । रामणीयकं रमणीयत्वम् ।

---

१ मनोरमतमस्फुर्जत् (S). २ विस्मयाविष्टविष्टपः (A).

३ अवनीतलवर्त्तिदृशोरमृतांशुसम्मदैकमकुलगेहम् (S).

परिस्फुरत्कान्तिभरप्रचारकः
स्वपीड़नेनापि परोपकारकः[१]।
समीपभाजां हृदयैकहारकः
स्वभावसौन्दर्य्यविशेषभूषकः ॥ २६ ॥

जगत्प्रमोदोदयदानसज्जनः
शुभौघलक्ष्यप्रवलप्रशंसनः।
नियन्त्रितानेकमनस्तुरङ्गमः
स्थिरीकृतालोककहृद्विहङ्गमः[२] ॥ २७ ॥

प्रमोदपात्रीकृतसर्व्वभूतलः
प्रतिक्षणाक्षीणगुणोर्म्मिशीतलः।
समुल्लसद्दीधितिपुञ्जमञ्जुलः
समस्तचित्तोत्सवकृत्स्वभावतः ॥ २८ ॥

श्लोकत्रयेऽपि पादान्ताचरलोपेन छन्दोऽन्तरं ज्ञेयम्।

जगत्त्रयैकान्तमनोज्ञताभू-
रनन्यसाधारणकान्तिकान्तः।

(२८) समस्तचित्तोत्सवकृत्स्वभावो यस्येत्येकं पदम्। पदान्ता-
चरलोपपत्तेऽन्यत् स्पष्टम्।

१ स्वपीड़नेनापि वृक्षोपकारकः (S).
२ स्थिरीकृतालोककहृद्विहङ्गमः (S).

अव्याजमाधुर्य्यसुधानिधानम्
मनोविहङ्गानयनैकपाशः[१] ॥ २९ ॥
निरवद्यसमुद्यदुज्ज्वल-
स्वगुणश्रेणिमनोहराकृतिः ।
त्रिजगज्जनचित्तचित्रकृ-
न्नयनानन्दसिताभ्रवर्त्तिका ॥ ३० ॥
अवनीतलवर्त्तिलोचना-
मृतवर्त्तिः प्रमदैकमन्दिरम् ।
घनविस्मयचित्रशालिका
हृदयाम्भोरुहभानुमण्डलः ॥ ३१ ॥
हृद्यतरद्युतिवारिपयोधि-
र्लोकविलोचन[२]शीतमयूखः ।
चारुतमापघनौघनिवेशो
भुवनत्रयस्थितविस्मयहेतुः[३] ॥ ३२ ॥

(२९) अव्याजमनौपाधिकं स्वाभाविकं यन्माधुर्यं सौन्दर्यं तदेव सुधा । चारुस्वादुमतोर्मधुरः ।

(३०) निरवद्यम् अनिन्द्यं सिताभ्रवर्त्तिका कर्पूरवर्त्तिका ।

(३२) अपघनौघनिवेशोऽङ्गनिवहसंस्थानभेदः ।

१ मनोविहङ्गाहरणैकपाशः (S).
२ विलोकनशीतमयूखः (S).
३ भुवनत्रयस्थितिविस्मयहेतुः (S).

मुख्यास्थानी सम्पदां सम्मदानां
लीलाशाला भाविता भावितानैः।
पुंसां नेत्रक्षेत्रपीयूषवृष्टि-
र्विश्वोद्दामाश्चर्य्यहर्य्यक्षशैलः॥ ३३॥

उद्यदुज्ज्वलगुणौघमेदुरो
रामणीयकविलासमन्दिरम्।
सुन्दरावयवसन्निवेशनं
कान्तकान्तिभरभासुराकृतिः॥ ३४॥

गुणमणिप्रकरैकमहोदधिः
सकललोकविलोचनचन्द्रमाः।
विलसदुज्ज्वलकान्तिनिकेतनम्
सहृदयौघचमत्कृतिकारणम्॥ ३५॥

लसदङ्गरुचिप्रचयेन युतो
नयनौघमधुव्रतफुल्लवनम्।
हृदयाब्जविजृम्भणतीक्ष्णकरो
घनविस्मयसम्मदवासगृहम्॥ ३६॥

(३३) भावितानैः दीप्तिविस्तारैः भाविता घटिता। उद्दामं यदेवाश्चर्य्यं चमत्कारस्तदेव हर्य्यक्षः सिंहस्तस्य शैलः क्रीडापर्व्वतः।

(३४) मेदुरः स्निग्धो मनोज्ञ इति यावत्।

तडित्पुञ्जमञ्जुप्रसरत्प्रतीक-[1]
प्रभापूरदूरावधूतान्धकारः ।
मनोमीनहर्षप्रहर्षैकवर्षं
दृगम्भोरुहानन्दसन्दोहहेतुः ॥ ३७ ॥

अखिलजगदवेक्ष्यमाणलक्ष्मीः
स्वगुणविराजिभिरङ्गकैः प्रशस्यः ।
वसतिरतिवलक्षहंसपक्षप्रकर-
विजित्वरकीर्त्तिकौमुदीनाम्[2] ॥ ३८ ॥

निःशेषलोकपरितोषकरस्वरूपः
शोभान्विताववयवसुन्दरसन्निवेशः ।
दूरं निरस्तखलदुर्व्वचनावकाशो
व्याजृम्भमाणगुणसंग्रहणप्रवीणः ॥ ३९ ॥

प्रव्यक्ततत्तदखिलावयवानवद्यः
प्रोद्यन्निजोज्ज्वलगुणप्रकराभिरामः ।
आनन्दिभिः सहृदयैरभिनन्द्यमानः
स्वप्रक्रियाभिरभितश्च विराजमानः ॥ ४० ॥

(३७) प्रतीकं शरीरम् ।

(३८) वलक्षपक्षिणो हंसाः ।

---

१ प्रसर्पत्प्रतीकप्रभापूरदूरावधूतान्धकारः (S).

२ वसतिरतिवलक्षपक्षचञ्चुप्रकरविजित्वरकीर्त्तिकौमुदीनाम् (A).

कुतुकतरलचित्तैः सज्जनैः स्तूयमान
स्त्रिभुवनजननेत्रक्षेत्रपीयूषवृष्टिः ।
प्रतिकलसमुदञ्चद्रूपसम्पन्निधानं
सकलमलविमुक्तः साधुवादेन युक्तः ॥ ४१ ॥

मुखरखरखलोक्तिध्वान्तविध्वंसनेन्दु-
र्विलसदमलकायव्यायतानन्तकान्तिः ।
अनणुगुणमणिश्रीश्रेणिविश्रामधाम
क्षपितसकलदोषः[1] सर्वसन्तोषहेतुः ॥ ४२ ॥

समुद्यत्प्रत्यङ्गप्रसृमरमनोज्ञद्युतिभरो
मनोमीनाकृष्टिप्रबलबडिशं काममृगयोः ।
घनाश्चर्य्यस्थानं जगति कुतुकोत्तानितदृशां
नराणामानन्दामृतलहरिदुग्धाम्बुधिरयम् ॥ ४३ ॥

उच्चैश्चेतोहरिणहरणाखर्वगन्धर्वगीतं
तत्तन्नेत्रावलिमधुलिहां माकरन्दः प्रवाहः ।
सर्व्वाश्चर्य्यप्रदसमुदयद्रूपसम्पन्निधानं
चञ्चद्रोचिःप्रचयसिचयच्छन्नसम्पन्नगात्रः ॥ ४४ ॥

(४१) प्रतिकलसमुदञ्चदतिकलमं पूरयित्वा प्रतिकलं प्रत्यवयवं समुदञ्चदिति वार्थः ।

(४२) काममृगयोर्मदनलुब्धकस्य ।

(४४) माकरन्दप्रवाहः पुष्परसनिस्यन्दः । सिचयं वस्त्रं ।

१ क्षपितनिखिलदोषः (S).

सकलजनताचित्ताश्चर्य्यप्रदप्रकटोल्लस-
न्मधुरिमपरीपाकोद्रेकस्फुरद्द्युतिसुन्दरः ।
नयननलिनानन्दोल्लासग्रहाधिपमण्डलो
मिलदवयवश्रीरोचिष्णुर्निजान्वयभूषणम् ॥ ४५ ॥
लसद्घनरसच्छटानयनमीनयोर्जन्मिना-
मुदञ्चदतिसुन्दरप्रसृमरप्रभाभासुरः ।
अमन्दगुणमन्दिरं[1] सुभगतालतामण्डपः
समस्तजनविस्मयप्रदसमुल्लसत्स्वाकृतिः ॥ ४६ ॥
अवयवसन्निवेशजितसर्वमनोज्ञचयो
घनवसुधाजनेक्षणसुधारससेचनकम् ।
सहृदयमानसाम्बुजविजृम्भणतीक्ष्णकरो
द्युतिभरभासिताकृतितया[2]तिचमत्कृतिकृत् ॥ ४७ ॥
सर्व्वावद्यविनाकृतः कृतपरीरम्भः समस्तै[3]र्गुणै-
रानन्दैकनिदानमानदपतिक्ष्मावासिराशिस्तुतः[4] ।

(४५) मधुरिमपरिपाकोद्रेकः सौन्दर्य्यपरिणामातिशयः ।

(४६) घनरसच्छटा जलश्रेणी । जन्मिनां प्राणिनां । प्रसृमरः प्रसरणशीलः । भासुरः शोभनः । सुभगता श्रीः ।

---

१ अनन्तगुणमन्दिरं (S).

२ द्युतिभरभाविताकृतितया (S).

३ समग्रैः (S).

४ मानवपतिक्ष्मावासिराशिस्तुतः (A).

उन्मीलन्निजकान्तिकेतकसमाकृष्टाक्षिपुष्पन्धयो
विद्वन्मानसराजहंसविसरावासाय सौधं सरः ॥ ४८ ॥
सान्द्रानन्दसुधासमुद्रलहरीसाम्राज्यमग्नात्मभिः
सर्वैः सर्वकलाकलापकुशलैः साकाङ्क्षमुद्वीक्षितः ।
उद्यद्भृद्यतगौरकान्तिपटलीविन्यासरम्याकृतिः
साधारण्यपदव्यतीतसहजोन्मीलत्तनुश्रीभरः ॥ ४९ ॥
अङ्गप्रत्यङ्गरङ्गत्प्रचुरतरमहाकान्तिभाराभिरामः
निर्व्याजभ्राजमानानणिमनिजगुणग्रामविश्रामधाम[1] ।
लोकैरालोक्यमानः प्रमदजलपरिषिक्तनेत्रारविन्दैः
आनन्दस्यैकसौधं[2] सकलवसुमतीमण्डलीसारभूतः॥५०॥

(४८) आनदपतिर्मदपतिः समुद्रस्तत्पर्य्यन्तं ये तदावासिनो लोकाः । अक्षिपुष्पन्धयस्तच्चुर्भ्रमरः ।

(४९) स एवं सुधासम्बन्धि सरः कासारः लहरी साम्राज्यं [तत्र जातिः वकः?] साधारण्यपदव्यतीतम् असाधारणमित्यर्थः ।

(५०) अङ्गप्रत्यङ्गेति अङ्गं हस्तपदादि, प्रत्यङ्गं अङ्गुल्यादि, रङ्गत् प्रसरत् । निर्व्याजभ्राजमानो निसर्गरमणीयः अनणिमनिजगुणग्रामः अणोर्भावोऽणिमा अत्यल्पपरिमाणत्वं तेन रहितो यो निजगुणानां ग्रामः समूहः ।

१ निर्व्याजभ्राजमानानुपमनिजगुणग्रामविश्रामधाम (S).
२ आनन्दस्यैकसारः (S).

एवं साधारणैः शब्दैरौचित्येन निवेशितैः ।
दक्षैश्छन्दःसु सर्वेषु कर्त्तव्यं पदयोजनम् ॥ ५१ ॥

अथ संस्कृतप्राकृतयोः समाः ।

अथोच्यन्ते मया केऽपि संस्कृतप्राकृते समाः ।
अन्यच्च वितताः शब्दा बालानां बुद्धिहेतवे ॥ ५२ ॥

अकारादौ पुंल्लिङ्गाः ।

हाराहारविहारसारसरसाः[1] सम्भोगरोगासुराः
संहारासरवारवारणगणाष्टङ्कारताराऽरणाः[2] ।
लोलोल्लासविलासवायसहराहङ्कारहीराङ्कुराः
नीहारोरगरागतालतरलागोविन्दकन्दोदराः ॥ ५३ ॥
तरुणतरणिदामामोहसन्दोहभासाः[3]
खुरखरतरुघासा कासरारम्भहासाः ।
करकरिकिरिकीराः कोलकल्लोलधीरा
मलमलयकरीरा वामदेवाभिवीराः ॥ ५४ ॥

(५३) हाराहारेत्यादि भाषाद्वये समाः समानरूपाः शब्दा इत्यर्थः । उल्लोलस्तरङ्गः । वायसः काकः । हीरो हीरकः । नीहारो हिमं । कन्दो मूलं ।

(५४) कासरो महिषः । किरिः शूकरः । करीरो वंशाङ्कुरः ।

१ समराः (S). २ भागाक्रगाः (S). ३ मासाः (S).

नरनरककरङ्का दण्डचण्डालरङ्काः
दरसरलकलङ्काः कम्बलाकारपङ्काः।
खलवहलकुरङ्गा देहसन्देहसङ्गाः
परकुररतरङ्गाश्चार[1]सञ्चारभङ्गाः ॥ ५५ ॥

अरि-हरि-परिणाहाः कण्ठकुण्ठाहिदाहाः
परिसरझरहाहामञ्जुमञ्जीरवाहाः।
अचलकुलकुमाराः कुम्भकुम्भीरमाराः[2]
विरलकवलजाराः सुन्दरोदारपाराः ॥ ५६ ॥

जम्बीरकेशरि[3]वराहमुरारिकालाः
काकोलकुन्तलचमूरुविरामवालाः।
आरोह[4]राहुरणसङ्गरचोलतालाः
संसारकेरलसमीरणटङ्कभालाः ॥ ५७ ॥

(५५) करङ्को हस्तिपञ्जरः। कुररः पक्षिभेदः।

(५६) परिणाहो विशालता। कुण्ठो मन्दः। झरः प्रवाहः। हाहा देवगायनः। मञ्जीरो नूपुरः। मारः कालः। कवलः ग्रासः। जारः उपपतिः। उदारो दातृमहतोः।

(५७) काकोलो द्रोणः काकः। कुन्तलः केशः। चमूरुर्मृग-भेदः। आरोहो नितम्बः। सङ्गरो युद्धम्। चोलो देशभेदः।

१ सञ्चारम्भहालाः (S). २ चार (S).
३ केसरि (A). ४ आलोलवाहुरणसङ्गरचोरभालाः (S)

आसारचामरतुरङ्गकुलीरसूराः
कङ्कालकन्दलकरालविलासपूराः ।
हेरम्बकम्बुविधुसिन्धुबुधाम्बबन्धाः[1]
कुन्देन्दुमन्दरसमीरसमूहगन्धाः ॥ ५८ ॥
भौमाङ्कसङ्करकिरीटतमालकुञ्जाः ।
हिन्तालतोमरमहीरुहबिम्बपुञ्जाः ।
हिण्डीरपिण्डवरसम्बर[2]कोणकाणाः
संरम्भसोमपरिरम्भविकारवाणाः ॥ ५९ ॥

वसन्तासववेशन्तवासवावासवासराः ।
कासारसारसरसाः किरणारुणवारणाः ॥ ६० ॥

तालः शब्दभेदस्तरुभेदो वा । केरलो देशभेदः । टङ्कः पाषाण-दारणः । भालो ललाटं ।

(५८) आसारो धारासम्पातः । कुलीरः कर्कटः । सूरः सूर्य्यः । कङ्कालो मध्यं । कन्दलस्तृणभेदः । करालो दन्तुरे तुङ्गे । पूरःप्रवाहः । कम्बुःशङ्खः ।

(५९) सङ्करो मिश्रणं । तोमरो बाणभेदः । बिम्बः फलभेदो मण्डलं वा । सम्बरोऽसुरभेदः ।

(६०) वेशन्तः क्षुद्रसरः ।

१ बुधानुबन्धाः (S). २ रवसम्बर (S)

एते पुंलिङ्गाः।

हेला खेला कला माला रसाला काहला चला।
कीलालीलाऽवलावालाऽलोलादोलालसामसी ॥ ६१ ॥
धरणी धारणा गोणी रोहिणी रमणी मणी।
वीणा वाणी रसा वेणी रौढ़ा गङ्गा तरङ्गिणी ॥ ६२ ॥
कदली लहरी नारी रामा भेरी वसुन्धरा।
कालीकरालीचामुण्डारण्डारम्भातुलामही ॥ ६३ ॥

एते स्त्रीलिङ्गाः।

जलफलपलमूलंवारिकीलालतूलं
वलपललदुकूलंलिङ्गगम्भीरकूलम्।
सलिलकमलचीरं तुच्छराजीवनीरं
हलरजतकुटीरं दारुनालं पटीरम् ॥ ६४ ॥

(६१) रसाला पक्वान्नभेदः। काहला वाद्यभेदोऽचला पृथ्वी। कीला वह्निज्वाला। मसी कालिका।

(६२) धारणा योगाङ्गभेदः। गोणी व्रीहिस्थापनशोणादि सूत्रमयः पात्रभेदः। रोहिणी नक्षत्रभेदः। मणीतिलिङ्गद्वये अस्य वृत्तिः। रसा पृथ्वी। वेणी प्रवाहः केशसंस्कारो वा। रौढ़ा अवमानना।

(६३) कदली रम्भा मृगभेदो वा। भेरी वाद्यभेदः। रण्डा विधवास्त्री।

(६४) कीलालं जलवक्तयोः। पललं मांसं। चीरं वल्कलं।

कारणं रोहणं वेलं कुहराम्बरमन्दिरम् ।
कुड्मलं मण्डलं तामरसं कुण्डलमङ्गदम् ॥ ६५ ॥
पुरारविन्दलोहाङ्गतडागं करणं कुलम् ।
तोरणं मरणं तुङ्गमानसागारभासुरम्[१] ॥ ६६ ॥

एते नपुंसकलिङ्गाः ।

भण गच्छ देहि संहर कुरु चोरय मारयावगच्छेहि ।
अवलोकयावचिन्तय खादेति धातुजं विद्धि ॥ ६७ ॥

अथ निरोष्ठ्याः ।

नीहारहारहरिणाङ्कहराट्टहास-
कैलासकासरदनारदसिंहमङ्गाः ।
शेषाहिहंसघनसारहरीन्द्रनाग-
डिण्डीरनिर्झर[२]शरद्घनचन्द्रकान्ताः ॥ ६८ ॥
शृङ्गारसागरतडागजडागयाग-
हर्य्यक्षतक्षकनखक्षतदीक्षिताक्षाः ।

(६५) तामरसं पद्मम् ।

(६७) धातुजं क्रियापदं विद्धि जानीहि ।

(६८) घनसारः कर्पूरः ।

(६९) तडागो रत्नादिरचितालङ्कारः । जडो मूर्खः । अगः सर्व्वतोवृत्तकः । कीचको वंशभेदः । चारणः परिचारकः ।

१ तुङ्गमलमागारभासुरं (A).     २ निर्झरशरद्घनचन्द्रकान्ताः ।

नाराचकाचकचकीचकचञ्चरीक-
चाणक्यचारणगणाक्षणकाणशोणाः ॥ ६९ ॥
संसारसारसरसारिरसालशाल-
कङ्कालकालकलिशैलखलालकार्काः ।
किञ्जल्ककल्ककरशङ्करकीरहीर-
लङ्केशकेशगरकेशरदेशलेशाः ॥ ७० ॥
आनन्दनन्दनधनञ्जयखञ्जरीटाः
कीटाग्निकण्टककटाहकटाक्षयक्षाः ।
दक्षाश्वयश्वजनकाञ्जलियत्नयन्त्रा-
रत्नाकरान्धकधराधरधीरसीराः ॥ ७१ ॥

एते पुंलिङ्गाः ।

गङ्गा गीता सती सीता सिद्धिः सन्ध्या गया गदा ।
आशीः काशी निशा नासा कान्तिः शान्ति र्दशा रसा ॥ ७२ ॥

(७०) रसाल आम्रः कल्को मानभेदः कीरः शुकः ।

(७१) कटाहो लौहपात्रभेदः सीरो लाङ्गलम् ।

(७२) आशीः भाग्यं शुभाशंसनं वा । काशी वाराणसी, नासा नासिका, दशा अवस्था वस्त्रैकदेशो वा, रसा पृथ्वी, आर्द्रा नक्षत्रभेदः, दृक् चक्षुः, कारा बन्धनगृहम्, शारी सारिका पक्षि-पाशको वा, दरी गृहम् । घटिका मुहूर्त्तः, खटिका कठिनी, कक्षा काञ्ची ।

आर्द्रानिद्राहरिद्राहृद्द्राक्षालाक्षाधृतिः क्षतिः ।
छायाजायाकथाकान्ताधात्री रात्री रतिर्गतिः[1] ॥ ७३ ॥
कन्धराधारणाधाराताराकाराजराधरा ।
आजीराजीरजन्यर्त्तिः कीर्त्तिः कन्या तटी नटी ॥ ७४ ॥
नारीसारीदरीदासीघटिकाखटिकाजटा ।
कक्षारक्षाशिखासंख्याकालिन्दीकलिकाकला ॥ ७५ ॥

एते स्त्रीलिङ्गाः ॥

चरणकरणचक्रं क्षेत्रनक्षत्रतक्रं
रजतशतशरीरं क्षीरनीराक्षितीरं ।
धनकनकनिधानं ध्यानसंस्थानदानं
नलिन[2]नगरगीतच्छत्रनेत्रास्थिगात्रम् ॥ ७६ ॥
आलिङ्गनस्नानशिरश्चरित्रं
जलस्थलस्थानकलत्रचित्रम् ।
कीलालजालालकनालदैन्यं
लिङ्गाङ्गनारण्यहिरण्यसैन्यम् ॥ ७७ ॥
अञ्जनाजिनयानासृक्काञ्चनाननकाननं ।
हाटकं नाटकं नाट्यं तैलं चैलं[3] रसातलम् ॥ ७८ ॥

(७७) नालं पद्मदण्डः, अङ्गनं चत्वराजिरे, हिरण्यं सुवर्णम् ।
(७८) अजिनं चर्म्म, असृक् शोणितं ।

१ क्षतिः (S). २ गरलगात्रं छत्रनेत्रास्थिदात्रं (S). ३ चेलं (S).

अदनं मदनं मानं[1] निदानं दधि चन्दनं।
अक्षरं लक्षणं लक्ष्यं शस्त्रं शास्त्रं दलं हलम् ॥ ७९ ॥

एते नपुंसकलिङ्गाः ॥

आशास्तेऽस्ति चकास्ति निन्दति सृजत्याशंसति क्रीडति
ध्यायत्यर्चति याचते व्यतिहरत्याराध्यति नश्यति।
शेते गच्छति यच्छतीच्छति नयत्यायाति हन्तीहते
ऽश्नाति स्नाति ददाति याति जयतीत्याद्याः क्रियाश्चिन्त-
येत् ॥ ८० ॥

इति प्रथमस्तवके सामान्यशब्दोनाम द्वितीयं कुसुमम् ॥०॥

---

१ दानं (S).

अथ वर्ण्यानि कथ्यन्ते तानि यानि कवीश्वरैः ।
महाकाव्यप्रभृतिषु प्रबन्धेषु बबन्धिरे ॥ १ ॥
राजा राजवधूः पुरोहितकुमारामात्यसेनाधिपाः
देशो ग्रामपुरीसरोऽब्धिसरिदुद्यानाद्यरण्याश्रमाः ।
मन्त्रो दूतरणप्रयाणमृगयाश्वेभर्त्त्विनेन्दूदयाः
वीवाहो विरहस्वयम्बरसुरापुष्पाम्बुखेलारतम् ॥ २ ॥
नृपे कीर्त्तिः प्रतापाज्ञादुष्टशास्तिविवेकिताः ।
धर्म्मप्रयाणसंग्रामशास्त्राभ्यासनयक्षमाः ॥ ३ ॥
प्रजारागोऽरिशैलादिवासोऽरिपुरशून्यता ।
औदार्य्यधैर्य्यगाम्भीर्य्यशौर्य्यैश्वर्य्योद्यमादयः ॥ ४ ॥

(१) मृगयाश्वेभर्त्त्विनेन्दूदया इति मृगया च अश्वश्च इभश्च ऋतवश्च इनेन्दूदयौ च ते तथा। वीवाह इति उपसर्गस्य घञ्-मनुष्येभ्यो बहुलमितिदीर्घः, स्वयम्बरसुरापुष्पाम्बुखेलारतम् इति स्वयम्बरश्च सुरापुष्पाम्बूनि च खेला च रतञ्च तेषां समाहारस्तथा ।

(३) नृप इत्यादि आज्ञा शासनम् इदमहमवश्यं करिष्यामि इति दृढ़निश्चयः, विवेकिता सदसद्विचारः, औदार्य्यं दातृत्व् तथाच उदारो दातृमहतोः, धैर्य्यं पाण्डित्यं, गाम्भीर्य्यमनवगाह्यहृदयत्वं, शौर्य्यं शूरत्वं, ऐश्वर्य्यं चमत्कारित्वं, उद्यमः परजयोत्साहः ।

१ शौर्य्यैश्वर्य्योद्यमादयः (S).

देव्यां सौभाग्यलावण्यशीलश्रृङ्गारमन्मथाः ।
त्रपाचातुर्य्यदाक्षिण्यप्रेममानव्रतादयः ॥ ५ ॥

वेणीधम्मिल्लसीमन्तभालश्रवणनासिकं ।
कपोलाधरनेत्रभ्रूकटाक्षरदभाषणम् ॥ ६ ॥

गण्डबाहुकरोरोजनाभीमध्यवलिचयं ।
रोमालिश्रोणिजङ्घोरुगतिक्रमनखंक्रमात् ॥ ७ ॥

पुरोहितो हितो वेदस्मृतिज्ञः सत्यवाक् शुचिः ।
ब्रह्मण्योविमलाचारः प्रतिकर्त्तापदामृजुः ॥ ८ ॥

कुमारे शस्त्रशास्त्रश्रीकलाबलगुणोच्छ्रयाः ।
वात्यालीखुरलीराजभक्तिः सुभगतादयः ॥ ९ ॥

मन्त्री भक्तः शुचिः शूरोऽनुद्धतो बुद्धिमान् क्षमी ।
आन्वीक्षिक्यादिकुशलः परिच्छेदी स्वदेशजः ॥ १० ॥

सेनापतिर्जितायासः स्वामिभक्तः सुधीरभीः ।
अभ्यासी वाहने शस्त्रे शास्त्रे च विजयी रणे ॥ ११ ॥

(५) सौभाग्यं पतिस्नेहः, शीलं सद्वृत्तं, मानश्चित्तसमुन्नतिः ।

(९) वात्यालीखुरली वादित्रघटाभ्यासः ।

(१०) आन्वीक्षिक्यादिकुशलः　. तर्कनीतिशास्त्रादिनिपुणः परिच्छेदी कार्य्याकार्य्यनिर्णेता ।

देशे[1] रत्नखनिद्रव्यपण्यधान्याकरोद्भवाः ।
दुर्गग्रामजनाधिक्यनदीमातृकतादयः ॥ १२ ॥
ग्रामे धान्यलतावृक्षसरसीपशुपुष्टयः ।
क्षेत्रावघट्ट[2]केदारग्रामेयसुखविभ्रमाः ॥ १३ ॥
पुरे ऽट्टपरिखावप्रप्रतोलीतोरणध्वजाः ।
प्रासादाध्वप्रपारामवापीवेश्यासतीत्वरी ॥ १४ ॥
सरस्यम्भो लहर्य्यम्भो गजाद्यम्बुजषट्पदाः ।
हंसचक्रादयस्तीरोद्यानस्त्रीपान्थकेलयः ॥ १५ ॥

(१२) नदीमातृकता नद्यम्बुपालितत्वं आदिशब्दाद्देव-मातृकता च ।

(१३) अवघट्टं घट्टं क्षुद्रविपणिस्थानं, ग्रामेयी नापित्यादि-स्त्री तस्याः सुखविभ्रमाः सुखविलासाः ।

(१४) अट्टं इष्टकाग्टहं, वप्रः प्राकारः, प्रतोली रथ्यातोरणो वहिर्द्वारं, अध्वा राजमार्गः, प्रपा पानीयशालिका, आराम उपवनं वापी दीर्घिका, सती साध्वी, इत्वरी गुप्तवेश्या ।

(१५) अम्भोगजादि जलवारणादि आदिशब्दाज्जलमानुष जलसिंहादयः । हंसचक्रादयः हंसः श्यालः, चक्रः चक्रवाकः, आदिशब्दात्मद्गुकारण्डवादि ।

---

१ वहुखनिद्रव्यपण्यधान्याकरोद्भवाः (S).

२ क्षेत्रावघट्टकेदारग्रामेयसुखविभ्रमाः (A).

अब्धौ द्वीपाद्रिरत्नोर्म्मिपोतयादो[१]जलप्लवाः ।
विष्णुः कुल्यागमश्चन्द्रार्द्धिरौर्व्वोऽभ्रपूरणम्[२] ॥ १६ ॥
सरित्यम्बुधियायित्वं वीच्यो जलगजादयः ।
पद्मानि षट्पदाहंसचक्राद्याः कूलशाखिनः ॥ १७ ॥
उद्याने सरणिसर्व्वफलपुष्पलताद्रुमाः ।
पिकालिकेलिहंसाद्याः क्रीड़ावाप्यध्वगस्थितिः ॥ १८ ॥
शैले मेघौषधीधातुवंशकिन्नरनिर्झराः ।
शृङ्गपादगुहारत्नवनजीवाद्युपत्यकाः ॥ १९ ॥

(१६) द्वीपाः सिंहलादयः अद्रयो मैनाकादयः, पोतो नौकाप्रभेदः, यादो जलजन्तुः, जलप्लवो जोयार इति ख्यातो जलप्रवाहः, जलशय्यागतो विष्णुः, कुल्या नदी, कुल्यमस्थि कुल्या-नीरप्रतोलिका तासामागमः प्रवेशः, और्व्वो वड़वानलः, अभ्रपूरणं मेघजलपूरणं ।

(१७) अम्बुधियायित्वं समुद्रप्रवेशः ।

(१८) सरणिः पद्धतिः ।

(१९) धातुर्गैरिकादिः, निर्झरो वारिप्रवाहः पादाः, प्रत्यन्त-पर्व्वताः. वनजीवादि सिंहव्याघ्रादि, आदिना किरातादयः, उपत्यकाद्रेरासन्ना भूमिः ।

---

१ जलोद्भवाः (A)   २ वाभ्रपूरणम् (A).

अरण्येऽहिवराहेभयूथसिंहादयो द्रुमाः ।
शुककाककपोताद्या भिल्लभल्लदरादयः ॥ २० ॥
आश्रमेऽतिथिपूजैणविश्वासो हिंस्रशान्तता ।
यज्ञधूमो मुनिसुता द्रुसेको वल्कलं द्रुमाः ॥ २१ ॥
मन्त्रे पञ्चाङ्गताशक्तिषाड्गुण्योपायसिद्धयः ।
उदया[1]श्चिन्तनीयाश्च स्थैर्य्यौन्नत्यादिसूक्तयः ॥ २२ ॥
दूते स्वस्वामितेजःश्रीविक्रमौन्नत्यकृद्वचः ।
शत्रुक्षोभकरी चेष्टा धार्ष्ट्यं दाक्ष्यमभीरुता ॥ २३ ॥

(२०) भिल्लभल्लौ वनमानुषभेदौ ।

(२१) एणविश्वासो हरिणविश्रम्भः, हिंस्रशान्तता हिंस्राणां व्याघ्रादीनां शान्तता शशकादिभिः सिंहाद्यवस्थानात्, द्रुसेको द्रुमाणां सेचनं ।

(२२) पञ्चाङ्गानि विपत्प्रतीकारदेशकालविभागादयः, तिस्रः शक्तयः प्रभावोत्साहमन्त्रजाः, षड्गुणा एव षाड्गुण्यं सन्धिविग्रह-यानासनादयः उपायाः सामदानभेददण्डाः, मन्त्रोत्साहप्रभाव-जास्तिस्रः सिद्धयः, सूक्तयः शोभनवचनानि ।

(२३) स्वामिनो नृपादेस्तेजः प्रतापः श्रीः सम्पत् विक्रमः शौर्य्यं चौन्नत्यं महत्त्वञ्चैतानि करोति यद्वर्णनां धार्ष्ट्यं निस्त्रपत्वं दाक्ष्यं राजकार्य्ये दक्षता ।

---

१ उदर्काश्चिन्तनीयाश्च (A).

युद्धे तु वर्म्मवलचाररजांसितूर्य्य-
निस्वाननादशरमण्डपरक्तनद्यः ।
छिन्नातपत्ररथचामरकेतुकुन्ति-
मुक्ताः सुरीवृतभटाः सुरपुष्पवृष्टिः ॥ २४ ॥

प्रयाणे भेरिनिस्वानभूकम्पवलधूलयः[1] ।
करभोक्षध्वजच्छत्रवाणशकटवेसराः ॥ २५ ॥

मृगयायां श्वसञ्चारो वागुरालीकवेषता[2] ।
भटहक्का[3] मृगत्रासः सिंहयुद्धं गतित्वरा ॥ २६ ॥

अश्ववेगित्वमौन्नत्यं तेजः सल्लक्षणस्थितिः ।
खुरात् खातरजोरूपं जातिर्गतिविचित्रता ॥ २७ ॥

(२४) युद्धकार्य्ये वर्म्म सन्नाहः, चारस्च गूढ़पुरुषः, तूर्य्यं वाद्यभाण्डं तस्य निस्वानो निनादः, नादः इति-हननेत्यादिशब्दः सुरीदेवस्त्रीजनस्तेनवृता भटाः ।

(२५) करभः उष्ट्रः, उक्षाणो वृषभाः, वेसरो गर्द्दभ्यामश्वतो जातोऽश्वः ।

(२६) श्वसञ्चारः शुनो भषकस्य भ्रमणं, वागुरा मृगबन्धनी-रज्जुः, अलीकवेषता मृगधारणार्थं कपटवेषः, नीलवेषेति च पाठः भटहक्का योधकृत् हक्काशब्दः, भटटक्केति च पाठः ।

(२७) औन्नत्यम् उच्छ्रायः, सल्लक्षणस्थितिः देवमणिप्रभृतीनाम्

---

१ रजोधूलयः (S). २ नीलवेषता (S). ३ भटटक्का (A).

गजे सहस्रयोधित्वमुच्चत्वं कर्णचापलम् ।
अरिव्यूहविभेदित्वं कुम्भमुक्तमदालयः ॥ २८ ॥

सुरभौ दोला कोकिलमारुत-
सूर्य्यगतितरुदलोद्भेदाः[1] ।
जातीतरपुष्पचयाम्रमञ्जरी
भ्रमरझङ्काराः ॥ २९ ॥

ग्रीष्मे पाटलमल्लीतापसरः
पथिकशोषवातोल्काः ।
सक्तुप्रपास्त्रीमृगतृष्णा-
म्रादिफलपाकाः ॥ ३० ॥

आवर्त्तरूपाणां प्रशस्तलक्षणानां स्थितिः, रूपं सौन्दर्य्यं, जातिः कौलिन्यं, गतिविचित्रता राधादिगमवैचित्रम् ।

(२८) सहस्रयोधित्वं सहस्रेण सार्द्धं युद्धक्षमत्वम्, उच्चत्वं औन्नत्यं, कर्णचापलं कर्णयोश्चाञ्चल्यं, अरिव्यूहविभेदित्वं अरीणां व्यूहो बलविन्यासः समूहो वा तद्भेदित्वं, मदालयो मदजलपायिनो भ्रमराः ।

(२९) सुरभौ वसन्ते, दोला हिन्दोला, सूर्य्यगतिः रवेरुत्त-रायणं, जातीतरः मालत्या अन्यः । तथा च न विकसति वसन्ते कोऽहेतुरिति ।

(३०) सरः, पथिकयोः शोषः, वातो झञ्झामारुतः, उल्का

[1] अश्वगतितरुदलोद्भेदाः (S).

वर्षासु घनशिखिस्मयहंसगमाः
पङ्ककन्दलोद्भेदौ[1] ।
जातीकदम्बकेतकझञ्झानिल-
निम्नगालिप्रीतिः ॥ ३१ ॥
शरदीन्दुरविपटुत्वं जलाच्छता-
गस्त्यहंसवृषदर्पाः ।
सप्तच्छदपद्मसिताभ्रधान्य-
शिखिपक्षमदपाताः ॥ ३२ ॥

अभ्युत्पातः, प्रपा पानीयशालिका, प्रपास्त्री तद्वर्त्तिनी मृगतृष्णामरुमरीचिका ।

(३१) घनशिखिस्मयो घनो मेघः, शिखी मयूरो घनमयूरयोः स्मयो गर्व्वः, हंसगमाः हंसगतं, हंसानां गमो मानससरः प्रतिगमनं, पङ्कः कर्द्दमः, कन्दलस्तृणभेदस्तयोरुद्भेद उद्गमश्च । जाती मालती, झञ्झानिलः उत्कटवातवाहित्वं, निम्नगा नदी, अलिनः षट्पदास्तेषां प्रीतिः ।

(३२) जलाच्छता वारिनैर्मल्यं, अगस्त्यमुनेर्हंसस्य वृषभस्य च [दर्पाः] पद्मः, सिताभ्रः शुक्लमेघः, शिखिनो मयूरस्य मदपक्षयोः पातः पतनम् ।

---

[1] पङ्कजकर्द्दमोद्भेदौ (S).

हेमन्ते दिनलघुता शीतयवस्तम्ब-
मरुवका हिमानि ।
करीष[1]पुष्पधूषरिकुन्दाम्बुजदाह-
शिशिरोत्कर्षाः ॥ ३३ ॥

सूर्य्येऽरुणता रविमणिचक्राम्बुज-
पथिकलोचनप्रीतिः ।
तारेन्दुदीपकौषधि-
घूक[2]तमश्चौरकुमुदकुलटार्त्तिः ॥ ३४ ॥

चन्द्रे कुलटाचक्राम्बुजम्लानि-
विरहितमोर्म्मिरौज्ज्वल्यम् ।
जलधिजलनेचकैरवचकोर-
चन्द्राश्मदम्पतिप्रीतिः ॥ ३५ ॥

(३३) मरुवकं पुष्पभेदो मरुया इति ख्यातः, करीषं शुष्क-गोमयं तद्धूमः, अम्बुजदाहः पद्मम्लानिः ।

(३४) अरुणता लौहित्यं, रविमणिः सूर्य्यकान्तः, घूकः पेचकः ।

(३५) औज्ज्वल्यं प्रसन्नता, कैरवं कुमुदं, चकोरः पक्षिभेद-चन्द्राश्म चन्द्रकान्तमणिः दम्पती जायापती ।

---

१ शिशीष (S). २ प्रभूततमः (S).

विवाहे स्नानशुभ्राङ्ग[1]भूषोलूलुत्रयीरवाः।
वेदीसङ्गीततारेक्षा लाजमङ्गलवर्त्तनम्॥ ३६॥
विरहे तापनिःश्वासचिन्तामौनकृशाङ्गताः।
अब्दसंख्या निशादैर्घ्यं जागरः शिशिरोष्णता॥ ३७॥
स्वयम्बरे शचीरक्षामञ्चमण्डपसज्जनं[2]।
राजपुत्रीन्नृपाकारान्वयचेष्टाप्रकाशनम्॥ ३८॥
सुरापाने विकलता स्खलनं वचने गतौ।
लज्जामानच्युतिः प्रेमाधिक्यं रक्ताक्षताभ्रमाः॥ ३९॥
पुष्पावचये पुष्पावचयः
पुष्पार्पणार्थिता दयिते।
माना गोत्रस्खलनेर्षा-
वक्रोक्तिसंभ्रमाश्लेषाः॥ ४०॥

(३६) शुभ्राङ्गः निर्मलाभ्यङ्गः, उलूलुर्जिह्वाध्वनिः, त्रयीरवः वेदध्वनिः, वेदी परिष्कृता भूमिः, तारेक्षा अरुन्धतीदर्शनं, लाजा भृष्टधान्यम्।

(३७) अब्दसंख्या वत्सरगणनम्।

(३८) नृपाकारान्वयचेष्टाप्रकाशनं नृपाणामाकारो रूपम् अन्वयो वंशश्चेष्टा ईङ्गितम् एषां प्रकटनम्।

(४०) पुष्पार्पणार्थिता दयितायाः नायकविषये पुष्पाणाम् अर्पणे आसक्तिः, गोत्रस्खलनेर्ष्या सपत्नीनां नामस्खलनेन दयित-

---

[1] स्नानशुद्धाङ्ग (S).   [2] मञ्चमण्डपसज्जता (S).

जलकेलौ सरःक्षोभश्चक्रहंसापसर्पणम्।
म्लानिपयोविन्दुहग्रागो भूषणच्युतिः ॥ ४१ ॥
सुरते सात्त्विका भावाः सीत्काराः कुड्मलाक्षता।
काञ्चीकङ्कणमञ्जीररावोऽधरनखक्षते[1] ॥ ४२ ॥
वर्ण्येषु वर्ण्यभावानां दिङ्मात्रमिह दर्शितम्।
सुधीभिश्चिन्त्यमानानां भवत्येवमनन्तता ॥ ४३ ॥

विषये ईर्ष्या, सुरतादिनिमित्तं रहोनय नायकं प्रति नायिकाया इदमितोपि दूरे रमणीयं कुसुममारामं विचिनुव इत्यादि-वचनभङ्गी वक्रोक्तिः, भ्रमरादिझङ्कारं श्रुत्वा साध्वसच्छलेन नायकालिङ्गनं सम्भ्रमाक्षेपः।

(४१) चक्रहंसापसर्पणं चक्रवाकहंसयोः पलायनं, दृग्रागश्चक्षु लौहित्यं, भूषणच्युतिः भूषणानां वलयादीनां जले करताडि-कादिना च्युतिः पतनम्।

(४२) सात्त्विक इभावा सत्त्वोद्रेकभावा भावविकारास्तथाच स्तम्भः स्वेदोऽथ रोमाञ्चः गात्रहर्षोऽथ वेपथुः। वैवर्ण्यमश्रुप्रलय-मित्यष्टौ सात्त्विका मताः। कुड्मलाक्षता आकुञ्चितनयनत्वं, काञ्ची मेखलादाम, कङ्कणो वलयः, मञ्जीरं नूपुरं, एषां रावो ध्वनिः, काञ्चीशब्दस्तु सुरतवैपरीत्ये भवति रदनखक्षते दन्तनखरयोर-धरस्तनादौ दंशनाघातौ।

(४३) वर्ण्येषु वर्णनीयेषु वर्ण्यभावानां वर्णनीयपदार्थानाम्।

१ रदक्षतम् (S).

असतोऽपि निबन्धेन निबन्धेन सतोऽपि वा[1] ।
नियमेन च जात्यादेः कवीनां समयस्त्रिधा ॥ ४४ ॥

असतोऽपि निबन्धे यथा ;—

रत्नानि यत्र तत्राद्रौ[2] हंसाद्यल्पजलाशये ।
जलेभाद्यं नभोनद्यामम्भोजाद्यं नदीष्वपि ॥ ४५ ॥
तिमिरस्य तथा मुष्टिग्राह्यत्वं सूचिभेद्यता ।
अञ्जलिग्राह्यता कुम्भोपवाह्यत्वं शशित्विषः ॥ ४६ ॥
शुक्लत्वं कीर्त्तिहासादौ कार्ष्ण्यं चाकीर्त्तिपापयोः ।
प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः ॥ ४७ ॥

(४४) असतोऽपि वस्तुतोऽविद्यमानस्यापि सतोऽपि वस्तुतो विद्यमानस्यापि, जात्यादेर्जातिगुणक्रियाद्रव्यस्य समय आचारः सम्प्रदायक्रमः, तथाच समयः शपथाचारकालसिद्धान्तयुक्तिष्विति ।

(४५) यत्र तत्राद्रौ रोहणादिगिरेरन्यत्रापि गिरौ, अल्पजलाशये पल्वलादौ, जलेभाद्यं जलवारणादि, नभोनद्याम् आकाशगङ्गायाम् ।

(४६) सूचिभेद्यता सूचिः सूक्ष्मशलाका तया विदार्य्यता, कुम्भोपवाह्यत्वं कलसैः पूरणीयत्वं, शशित्विषः ज्योत्स्नायाः ।

(४७) कीर्त्तिहासादौ आदिशब्दात् गुणसाधुमनः-प्रभृतयः, अकीर्त्तिपापयोः कुकीर्त्तिपापादौ आदिशब्दात् अगुणदोष-खलमनः-प्रभृतयः ।

---

१ सतोऽपि च (S). २ यत्रतत्राब्धौ (A).

विभावर्य्यां भिन्नतटाश्रयणं चक्रवाकयोः ।
ज्योत्स्नापानं चकोराणां चतुष्कत्वं पयोनिधेः ॥ ४८ ॥

सतोऽप्यनिबन्धो यथा :—

वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने ।
अशोके च फलं ज्योत्स्नाध्वान्ते कृष्णान्यपक्षयोः ॥ ४९ ॥
कामिदन्तेषु कुन्दानां मुकुलेषु च रक्तता ।
हरितत्वं दिवा नीलोत्पलानाञ्च विकासिता[१] ॥ ५० ॥
वर्ण्यते न्नसदप्येतन्नियमोऽथ प्रकाश्यते ।
भूर्जत्वग्घिमवत्येव मलये ह्येव चन्दनम् ॥ ५१ ॥
सामान्यग्रहणे शौक्ल्यं छचाम्भःपुष्पवाससाम् ।
कृष्णत्वं केशकाकाहिपयोनिधिपयोमुचाम् ॥ ५२ ॥
रक्तत्वं रत्नबन्धूकविम्बाम्भोजविवस्वताम् ।
तथा वसन्त एवान्यपुष्टानां कलकूजितम् ॥ ५३ ॥

(४८) विवर्ण्यं यदसदप्येतद् इत्यत्र चतुष्कत्वं पयोनिधेः ।

(४९) ज्योत्स्ना च ध्वान्तञ्च ते ।

(५०) कामिदन्तेषु रक्तत्वं कुन्दानां मुकुलेषु च हरितत्व-मित्यन्वयः ।

(५१) (५२) (५३) भूर्जत्वगित्यादि जातिनियमः शौक्ल्य-मित्यादि गुणनियमः कूजितमित्यादि क्रियानियमः कमलेत्यादि-क्रियाद्रव्यनियमः ।

---

१ विकासितम् (S).

वर्षास्वेव मयूराणां रुतं नृत्यं च वर्णयेत्।
नियमस्य विशेषोऽथ पुनः कश्चित् प्रकाश्यते॥ ५४।

कमलासम्पदोः कृष्णहरितोर्नागसर्पयोः।
पीतलोहितयोः स्वर्णपरागाग्निशिखादिषु॥ ५५॥

चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः।
दानवासुरदैत्यानामैक्यमेवाभिसम्मतम्॥ ५६॥

बहुकालजन्मनोऽपि शिवचन्द्रस्य बालता।
मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः॥ ५७॥

इति प्रथमस्तवके वर्ण्यस्थितिर्नाम
तृतीयं कुसुमम्॥

---

(५५) कमलासम्पदोर्लक्ष्मीराजसम्पत्त्योः, कृष्णहरितोः असित-पलाशवर्णयोः, स्वर्णं कनकं, परागः कौसुमरेणुः, अग्निशिखादिष्विति आदिशब्दात् सूर्य्यकराणाञ्च।

(५६) शशैणयोः शशहरिणयोः, दानवा दनुतनया असुराः सुरविरोधिनः, दैत्या दितिपुत्राः, ऐक्यमित्यनेन कमलादेः सर्व्वस्यान्वयः।

अथ कथादिके राजवर्णनाद्युपयोगिनः।
अनुप्रासस्य सिद्ध्यर्थं[1] वर्णान् कतिपयान् ब्रुवे ॥ १ ॥
वर्णानामनुवृत्तिर्या नातिदूरान्तरस्थितिः।
अनुप्रासः स तेनैव सनाथा काव्यपद्धतिः ॥ २ ॥
गतालङ्कारशङ्कोऽपि काव्यबन्धो विराजते।
वर्णाः सद्योऽर्णवोद्गीर्णसुधाविस्पर्द्धिनो[2] यदि ॥ ३ ॥
मृगनाभिसनाभिश्रीः श्रीकण्ठाकुण्ठकण्ठरुक्।
सतो यतो यदच्छायो घनाघनघनद्युतिः ॥ ४ ॥
स्वर्धुनी ते धुनीते ऽघं निर्यन्निर्जरनिर्झरा।
मेदुरापा दुरापात्वामक्षता रक्षतात् क्षतात् ॥ ५ ॥

(१) अथ कथादिके आख्यायिकादौ प्रस्तुतकथास्तवके वा।

(२) अनुवृत्तिः पश्चाद्वृत्तिः, अनु पश्चात् प्रकर्षेण आसनं क्षेप इति कृत्वा।

(३) सद्यः तत्काले अर्णवात् उद्गीर्णा उद्गता सुधा तां विस्पर्द्धितुं शीलास्ते।

(५) ते तव अघं पापं धुनीते नाशयति, कीदृशी निर्यन् निर्गच्छन् इन्लगताविव्यस्य धातोः शतरि रूपं, निर्जरो निर्मलो निर्झरो वारिप्रवाहो यस्याः सा, तथा सा किम्भूता पुनर्मेदुरापा

---

१ सिद्ध्यार्थम् (S).

२ सद्योऽर्णवोद्गीर्णसुधाविस्पर्द्धिनः (S).

अर्य्यमावर्य्यमाहात्म्यः कोकशोकविमोककृत् ।
कीनाशभीनाशकरः प्रवालप्रवलच्छविः ॥ ६ ॥
घनाभोगे नभोगे त्वां सेवते देवतेश्वरः ।
वन्देऽहं गतसन्देहं विमलं कमलं तव ॥ ७ ॥
स्फुर्जद्धूर्जटिसङ्काशः कोपे गोपतिकेतनः[1] ।
वैरिमर्दी कपर्दी च निस्तन्द्रश्चन्द्रचूड़वत् ॥ ८ ॥
रणे गणेशसंकाशो गतार्त्तिः कार्त्तिकेयवत् ।
श्रीमान् रामाभिरामश्रीः स त्रिविक्रमविक्रमः ॥ ९ ॥
विश्वरूपसरूपश्रीः[2] क्रतुपूरुषपौरुषः ।
श्रीवत्सलाञ्छनच्छायो धरणीधरदुर्द्धरः ॥ १० ॥

त्रिपथजला अः समासान्तः, दरापा दुष्प्रापा त्वां चतात् चयात् रचतात् रचतु, कीदृशी अचता न विद्यते चतं चयो यस्याः सा ।

(६) अर्य्यमा सूर्य्यः, कोकश्चक्रवाकः, कीनाशो यमः, तस्मात् या भीस्तस्य नाशकरः प्रवालो विद्रुमः, नवपल्लवे ।

(७) नभोगे गङ्गे घनाभोगे घनो निविड़ आभोगः परिपूर्णता यस्याः घनभोग इति च पाठः कमलं वारि अलम् अत्यर्थं वा ।

(८) गोपतिकेतनः वृषभध्वजः कपर्द्दीव शिव इव निस्तन्द्रः निरालस्यः ।

(९) त्रिविक्रमः वामनः त्रयो विक्रमास्तेन सहितः ।

(१०) क्रतुपूरुषो विष्णुः ।

---

१ कोपगोपतिकेतनः (S). २ विश्वरूपसरूपश्रीः (S).

विश्रवश्रवसाविश्रम्भछद्मना पद्मनाभवत् ।
रराज राजराजश्रीः पितामहमहा महान् ॥ ११ ॥
कश्चित् दुश्च्यवनप्रायः पाकशासनशासनः ।
श्रीमानिन्द्र इवोन्निद्रः समन्युः शतमन्युवत् ॥ १२ ॥
निविड़ौजा विड़ोजोवदनघो मघवानिव ।
जम्भदम्भजिदारम्भः प्रत्यूहव्यूहवर्ज्जितः ॥ १३ ॥
महीमहीयान् संसारमारः शक्रपराक्रमः ।
सङ्कल्पकल्पवृक्षश्रीः प्रज्ञावज्ज्ञातवाग्यतिः ॥ १४ ॥

(११) विश्रवश्रवसा कृष्णेण विश्रः कृतावेशश्छद्मना कैतवेन, राजानो यज्ञास्तेषां राजा कुवेरः तद्वत् श्रीर्यस्य, पितामहो ब्रह्मा तद्वन्महस्तेजो यस्य ।

(१२) दुश्च्यवनप्राय इन्द्रतुल्यः पाकशासन इन्द्रस्तद्वत् शासनम् आज्ञा यस्य, उन्निद्रो निरालस्यः, समन्युः सक्रोधो यज्ञसहितो वा ।

(१३) निविड़ौजा निविड़मोजो यस्य स तथा विड़ौजा इन्द्रस्तद्वत् विद्यते अघं पापं यस्येति अनघः जम्भोऽसुरस्तस्य दम्भजित् इन्द्रस्तद्वदारम्भो यस्य, प्रत्यूहो विघ्नस्तस्य व्यूहो वृन्दम् ।

(१४) सङ्कल्पो मनोरथः ।

श्रीरङ्गरङ्गदङ्गश्रीर्वलिर्वालिबलाद्बली।
नयन्नयन्नपुरुषः शिपिविष्टनिविष्टधीः॥ १५ ॥
स्मरघस्मरसङ्काशो भाग्यसौभाग्यभाग्यसौ।
धुर्य्यमाधुर्य्यसारश्रीः[1] कुशली मुषली यथा॥ १६ ॥
रुचिरो रुचिरोचिष्णुः क्षमया क्षमया समः।
काससंकाशसत्कीर्त्तिः सर्व्वदा सर्व्वकामकृत्[2] ॥१७॥
प्रीणाति प्राणिनामेष मनोहरमनोहरः।
महादेवमहादेवः करुणावरुणालयः॥ १८ ॥
तनयो विनयोपेतः केतकश्वेतकीर्त्तिमान्।
राजते राजतेजोभिः कविराजिविराजितः॥ १९ ॥

(१५) श्रीरङ्गः कृष्णस्तद्वत् रङ्गन्तौ उद्यन्तौ अथवा श्रीः शोभा रङ्गः खेला ताभ्यां रङ्गन्तौ अङ्गशौर्यस्य, शिपिविष्टः कृष्णः।

(१६) स्मरस्य घस्मरो भक्षको महादेवः, भाग्यसौभाग्ययोर्भागोऽस्यास्तीति स तथा धूर्य्यो धुरीणः तस्य यन्माधुर्य्यं लावण्यं तेन सारः शौर्यस्य, कर्म्मधारयो वा मुषली बलभद्रः।

(१७) क्षमया क्षान्त्या क्षमया पृथ्व्या समः।

(१८) हरवन्मनोहरः अयं देवो राजा महादेववन्महो यस्येति तथा करुणा कृपा तस्या वरुणालयः समुद्रः।

---

१ धुर्य्यमाधुर्य्यमारश्रीः (S).   २ सर्व्वदामकृत् (S).

मणिद्युमणिदुष्प्रेक्ष्योज्ज्वलदुज्ज्वलभूषणः ।
उद्दामधामकामश्रीधर्म्मकर्म्मणि शर्म्मभाक्[1] ॥ २० ॥

भूखण्डाखण्डलः काण्डचण्डकोदण्डपण्डितः ।
प्रचण्डकुण्डलोद्दण्डगण्डमण्डलमण्डितः ॥ २१ ॥

सन्निधानं निधानं तेऽकरवं नरवन्दितः ।
नितरां वितराम्बूनि राजसे राजसेवक ॥ २२ ॥

हारमणी रमणीया नाकनायकनायिका ।
भाविता भावितानेन कलिता ललितालकैः ॥ २३ ॥

(२०) मणिश्च द्युमणिः सूर्य्यश्च तद्वद्दुष्प्रेक्ष्यो दुर्दर्शः, शर्म्म सुखं भजते इति शर्म्मभाक् भजो ण्विः ।

(२१) भूखण्डाखण्डलः भूमीन्द्रः काण्डेन शरेण चण्डः कोदण्डः धनुस्तत्र पण्डितः ।

(२२) सन्निधानं सान्निध्यं, निधानं धनं, अकरवं करोमि स्म नितरामतिशयेन अम्बूनि वितर देहि ।

(२३) हारमणीभिः रमणीया रम्या नाकनायक इन्द्रस्तस्य नायिका, भावितानेन दीप्तिवृद्ध्या ललितालकैः शोभन-चूर्ण-कुन्तलैः ।

१ मर्म्मभाक् (S).

कान्ता कान्तालकान्तासौ श्रेयसी प्रेयसी भृशम्।
कन्दः कन्दर्पदर्पस्य पाटलापाटलाधरा ॥ २४ ॥
खर्वीकृतोर्वशीगर्वा निर्वासितरतिद्युतिः।
रमणी रमणीयासौ सुमनस्सुमनःस्मिता ॥ २५ ॥
शबरी कबरीरम्या प्रवराः शबरास्तथा।
सर्वतः पर्वतः श्रीमानधुनामधुना मतम्[1] ॥ २६ ॥
बुधा मुधा सुधाबुद्धिर्मुग्धा मुग्धाधरेऽधरे।
सारवं सारवं तोयं रुचिरं सुचिरं न किम् ॥ २७ ॥
अमुना यमुनातीरे शैशवं कैशवं पुरा।
स्फुरदक्षेण दक्षेण स्फुटं दृष्टमदृष्टतः ॥ २८ ॥

(२४) कन्दो मूलं पाटला पाटलपुष्पं तद्वत् पाटलो लोहितो ऽधरो यस्याः सा।

(२५) तथा निर्व्वासिता दूरीकृता रतेः कामपत्न्या द्युतिः सौन्दर्य्यं यया, सुमनसो देवास्तेषां पुष्पं पारिजातं तद्वत् स्मितं हासो यस्याः सा।

(२६) प्रवराः श्रेष्ठाः शबरा वन्यमानुषाः मधुना वसन्तेन।

(२७) भो बुधाः! मुग्धाः मूढाः! मुग्धायाः सुन्दर्य्याः अधरे सुधाबुद्धिः मुधा मृषा वृथेत्यर्थः किम्भूतेऽधरे तुच्छे सारवं सरयूसम्बन्धि सारवं आरवमतितच्च।

(२८) केशवं केशवसम्बन्धि, शैशवं शिशुत्वं, स्फुरदक्षेण स्फुरन्ती अक्षिणी यस्येति दक्षेण कुशलेन अदृष्टतः सुकृतवशात्।

1 मतं (S).

उग्रोग्रो गिरिगिरिशः श्रम्भुशोभाच्युताच्युतः।
कृष्णकृष्णो हयविग्रः सूर्यशौर्यो रविच्छविः ॥ २९ ॥
भीमभीमो रुद्ररौद्रो धामधाममहामहाः।
मेधावेधा जिष्णुजिष्णुः शूरशूरो ध्रुवध्रुवः ॥ ३० ॥
देवदेवकालकालभीमभीमरामराम।
सारसारधामधाममांसमांसरक्षोरक्ष ॥ ३१ ॥

अरुणारुणकपिकपिशः
सदावदातविसविशदोऽसौ।
उन्मीलन्ती लक्ष्मीः[1]
परितो हरितो निकामतः श्यामः ॥ ३२ ॥

(२९) उग्रो हरस्तद्वदुग्रः क्रूरः, गिरि वाण्यां गिरिश इव गिरि गिरिशः, अच्युतवत् कृष्णवत् अच्युतः।

(३०) भीमः शिवस्तद्वत् भीमः भयङ्करः, धाम्नि तेजसि धाम गृहं, महत् महो यस्य, मेधायां वेधा इव, जिष्णुरिन्द्रो अर्ज्जुनो वा तद्वत् जिष्णुर्जयनशीलः, शूरः सूर्य्यस्तद्वच्छूरः विक्रान्तः, ध्रुवः औत्तानपादिस्तद्वत् ध्रुवो निश्चलः।

(३२) अरुणः सूर्य्यो गरुडाग्रजो वा तद्वदरुणो लोहितो यः कपिस्तद्वत् कपिशः पिङ्गलः, सदा अवदातं शुक्लं यद्बिसं मृणालं तद्वद्विशदः, हरितो हरिवर्णात् श्रीकृष्णतो वा निकामतः अतिशयेन श्यामः।

---

१. उन्मीलन्ती गौरश्रीः (S).

नरा न राजन्ति सखे सखेदाः
प्रभा प्रभातेव कृशा कृशानोः ।
वामोरु वामो रुषितो विधाता
मुक्तासि मुक्तासितकीर्त्तिना त्वम् ॥ ३३ ॥

स्वःसिन्धुतीरेऽघविघातवीरे
लसत्समीरे करलभ्यनीरे ।
वसन् कुटीरे परिधाय चीरे
करोम्यधीरे न रुचिं शरीरे ॥ ३४ ॥

आनन्दतुन्दिलपुरन्दरमन्दमुक्त-
मन्दारदाममकरन्दकरम्बिताङ्गीं ।

(३३) हे सखे ! सखेदा दुःखिता नरा न राजन्ति न शोभन्ते, कृशानोरग्नेः प्रभा प्रभातेव प्रातरिव इवार्थे वकारः । हे वामोरु ! हे सुन्दरि वामः प्रतिकूलो विधाता रुषितः रुष्टः यतो मुक्ता अवसिता सितकीर्त्तिर्यस्य तेन नायकेन त्वं मुक्तासि त्यक्ता भवसि ।

(३४) कुटीरं क्षुद्रकुटी, चीरे वल्कले, अधीरे चञ्चले ।

(३५) गङ्गां भजामि, किम्भूताम् आनन्देन तुन्दिलः स्थूलः पुरन्दरः तस्य मन्दमुन्मुक्तं मन्दारदाम कल्पतरुकुसुममाला तस्या यो मकरन्दः पुष्परसस्तेन करम्बितं मिश्रितं अङ्गं यस्यास्तां तथा पुनः किम्भूतां अनङ्गरिपुः शिवस्तस्य तुङ्गतममत्युच्चं यदुत्त-

गङ्गामनङ्गरिपुतुङ्गतमोत्तमाङ्ग-
केशग्रहग्रहिलवीचिभुजां भजामि[1] ॥ ३५ ॥

इत्यमर्त्त्यनृपामात्ययुवत्याद्युपवर्णनैः।
शब्दान् पश्येद्[2] यथौचित्यं क्षिप्रानुप्राससिद्धये ॥ ३६ ॥

अथानुप्राससिद्ध्यर्थ[3]मुपायान्तरमुच्यते।
आदिक्षान्तलिपौ कादिक्षान्तशब्दगवेषणम्।
चित्रानुप्रास-यमक-शब्दनिश्चयकृद् भवेत् ॥ ३७ ॥

यथा कलं खलं गलं चलं छलं जलं तलं।
स्थलं दलं नलं पलं फलं बलं मलं ह्लं ॥

माङ्गं शिरस्तस्य केशग्रहग्रहिला आसक्ता वीचिरेव भुजो यस्यास्तां तथा। अन्योऽपि तुङ्गस्थानात् पतनभीत्या भुजेन किञ्चिदवलम्बते।

(३७) आदिक्षान्तेत्यादि अकारो वर्ण आदिर्यस्याः क्षकारो वर्णोऽन्तो यस्याः साऽदिक्षान्ता एवम्भूता या लिपिः पञ्चाशद्वर्णात्मिका तत्र ककारादिक्षकारान्तशब्दानां गवेषणमन्वेषणं चित्रानुप्रासयमकरूपा ये शब्दास्तेषां निश्चयकृद्भवति। अर्थो ह्यनिरपेक्षतया सर्व्वत्रानुपलभ्यमानत्वाच्चित्रादिकं न भवतीति कादिक्षान्तगवेषणमित्युक्तं तदेवाचरमाणयेव उदाहरति कल खलेति चित्रं प्रभेदः।

१ भजामि (S). २ पश्य (S). ३ श्रीघ्रानुप्रासकिद्ध्यर्थाम् (S)

कौरं चौरं जौरं तौरं धौरं नौरं वौरं सौरं

छौरं क्षौरं। ६५। एवमन्यत्रापि।

यत्किञ्चिदत्र न मया गदितं

ग्रन्थस्य गौरवभयात्।

मत्कृतचन्द्रकलापे[1]

ऽमलमतिभि[2]स्तद्बुधर्ज्ञेयम्॥ ३८॥

इति कविकल्पलतायां प्रथमस्तवके अनुप्रासो नाम

चतुर्थं कुसुमम्।

समाप्तः प्रथमस्तवकः॥

१. मत्कृतकविकल्पलतायाम् (S). २ परिमलतः (S).

अथ श्लेषस्तवकः।

उद्दिष्टवर्णनं वर्णाः प्रकीर्णा संख्यया सह।
रूढ़ादिश्चेति पञ्चेह कुसुमानि यथाक्रमम्॥ १॥

श्वेत्यादिभिर्विभिन्नस्योद्दिष्टवस्तुद्वयस्य यत्।
अभेदः क्रियते श्लेषात्तस्मादुद्दिष्टवर्णनम्॥ २॥

सितकृष्णौ विधुहरी
क्षितितारा भ्रकनागराजघनसाराः।
रामपयोराश्यर्ज्जुन-
सिंहीजानन्तचन्द्रहासाद्याः॥ ३॥

शङ्करतारकेश-
सदाकाशव्योमकेशतालाङ्काः।

(३) विधुश्चन्द्रो विष्णुश्च। हरिः कृष्णः सिंहश्च। शिती धवल-मेचकौ। तारा नक्षत्रम् चक्षुषः कनीनिका च। अभ्रकं गिरिज-माकाशञ्च। नागराजो गजः शेषश्च। घनसारः कर्पूरो मेघश्रेष्ठश्च। रामो बलभद्रो दाशरथिश्च। पयोराशिर्दुग्धसमूहः समुद्रश्च। अर्ज्जुनः शुभ्रः पार्थश्च। सिंहीजः सिंहो राहुश्च। अनन्तो बल-भद्रः कृष्णश्च। चन्द्रहासः चन्द्रहास्यं खड्गश्च।

(४) शङ्करः कम्बुकान्तिः कृष्णश्च। तारकेशश्चन्द्र उज्ज्वल-श्चालश्च। सदाकाशः सर्व्वदाकाशः सद्गगनश्च। व्योमकेशः शिवो नभोबालौ च। तालाङ्को बलभद्रस्तालकलङ्कौ च। नीलांशुको

नीलांशुकोऽधिकेशो
ऽरिष्टः सदासिचयकलकण्ठाः ॥ ४ ॥

हरिजिष्णुघनाब्धिभ्यो गजाः सिन्धुर्मुरारितः ।
अम्बुवाहोऽजानि कृष्णाद् यमुना कुम्भितोद्विषः ॥ ५ ॥

कृष्णार्थाग्रात्तटिनीवाचकशब्दात्
परं वरो योज्यः ।
नीरदघनोपलसितसदा-
हिमकरसिन्धुवेणीपृथुलाभाः ॥ ६ ॥

बलभद्रः कृष्णकान्तिश्च । अधिकेशः अधिकशिवः अधिकबालश्च । अरिष्टं तक्रं । काकश्चारिष्टः । सदा सिचयः सिचयो वस्त्रं असिचयः खड्गसमूहश्च । कलकण्ठो हंसः पिकश्च । पिके पारावते हंसे कलकण्ठःकलध्वनौ ।

(५) शुक्लश्यामाभिधायका भवन्तीति शेषः । हरिगज ऐरावतः । एवं जिष्णुगजो घनगजोऽब्धिगजश्च । पक्षे हरिर्विष्णुर्गजो हस्ती । एवं सर्वत्र बहुवचननिर्देशात् गजपर्य्याया अपि गृह्यन्ते । मुरारिसिन्धुर्गङ्गा कृष्णसमुद्रौ च । अम्बुवाहः उच्चैःश्रवाः मेघश्च । कृष्णाजं कृष्णनाभीपुण्डरीकं नीलोत्पलञ्च । यमुनारिर्बलभद्रो यमुनास्पर्द्धी च । कुम्भिवैरी सिंहो गजस्पर्द्धी च ।

(६) सितश्यामवाचका इति पूर्व्ववत् । कृष्णार्थाग्रात्तटिनीवाचकशब्दाद्वरो यथा । कृष्णनदीवरकान्तिः । गङ्गाश्रेष्ठकान्तिः । पक्षे, कृष्णनदीश्वरस्य समुद्रस्येव कान्तिः । नीरदो निस्थितदन्तो

बहन् कलभवच्छायामन्धकारातिदीधितिः।
सदाधिकेशवच्छायोऽनेकपायसमच्छविः॥ ७॥

वपुर्महोदधिच्छायं बिभ्रत् सैन्धवकान्तिमान्।
स्फटिकाचलसच्छ्रीः स्पष्टांशुकरुचिं बहन्॥ ८॥

धौताम्बरश्रियं धत्ते स्फटिकान्तश्रियान्वितः।
अर्ज्जुनद्युतिविद्योतीत्येवमादि समुन्नयेत्॥ ९॥

रक्तश्वेतौ हरिशुचि-
पुष्करसितपक्षसूर्य्यकान्ताब्जाः।
नवहंसमहापद्मार्कसोदराः
कमलकीलाले॥ १०॥

मेघस्य। घनोपलसितः। घनोपलः करका तद्वत् सितः। घनो मेघः तद्वदुपलः सितः कान्तः। सदाहिमकरः चन्द्रः सर्पमकरौ च। सिन्धुवेणिः नदीप्रवाहः समुद्रकेशविन्यासौ। पृथुलाजाभः महती भृष्टधान्यस्येवाभा यस्य लक्ष्यस्येव च।

(१०) हरिश्चन्द्रसूर्य्ययोः। शुचिः श्वेतवैश्वानरयोः। पुष्करं जलपद्मयोः। सितपक्षं हंसपक्षयोः। सूर्य्यकान्तः स्फटिके सूर्य्यवत् कान्ते च। अब्जः शङ्खाम्बुजयोः। नवहंसे नूतनहंसे प्रत्ययसूर्य्ये च। महापद्मः श्वेतनागे पद्मे च। अर्कः स्फटिकसूर्य्ययोः। कमलं जलपद्मयोः। कीलालं जलरक्तयोः।

सुहृद्रत्नादिभिर्भानो रत्नेनाग्नेरदांशुकैः।
जलेभ्यो जन्मशोभाभिः सरोजकुमुदारिभिः॥ ११॥

सूर्य्योपलसितद्युतिः
पीतश्वेतौ गौरद्विजराजकपर्द्दशम्भुहरितार्क्ष्याः।
हैमस्तोमाष्टापदमहारजत-
चन्द्रकलधौताः॥ १२॥

(११) भानोः परस्मात् सुहृद्रत्नादिभिः मतरक्तौ। यथा रविमित्रं चन्द्रः रवितुल्यश्च। भानुरत्नं सूर्य्यकान्तः रविपद्मरागौ च। अग्निरत्नं सूर्य्यकान्तोऽग्निपद्मरागौ च। रदांशुकं दन्तवस्त्रेऽधरे च। जलजशोभा जलजाचासौ शोभा चेति पद्मकान्तिश्च। एवं सरोजारिशोभा सरोजस्पर्द्धिनी शोभा पक्षे सरोजारिश्चन्द्रः। कुमुदारिशोभा कुमुदस्पर्द्धिनी शोभा पक्षे कुमुदारिरादित्यः।

(१२) गौरः पीतसितयोः। द्विजराजो गरुड़चन्द्रयोः। शम्भुः जटाजूटवराटकयोः। शम्भुः ब्रह्मत्रिलोचनयोः। हरिः पिङ्गलः सिंहश्च। तार्क्ष्यो गरुड़ः। पक्षे उच्चैःश्रवाः। हैमस्तोमः। हेम्नोऽयं हैमः। पक्षे हिमस्यायम्। अष्टापदः स्वर्णशरभयोः। महारजतं स्वर्णरूप्ययोः। चन्द्रः स्वर्णशशाङ्कयोः। कलधौतं स्वर्णरूप्ययोः।

सुशोभितारकूटश्रीः स्वर्णस्तोमसमद्युतिः ।
दहनोपलसत्कान्तिर्गाङ्गेयद्युतिपेशलः[1] ॥ १३ ॥
कमलाधिपपद्मेशौ नागजित् सूर्य्यभूस्तथा ।
रत्नाकरवरश्रीकः सदाधिकमलद्युतिः ॥ १४ ॥
सदा सिन्दूरमुज्जेता कलयन् नलिनश्रियम् ।
स्फुटशोभनताम्रश्रीर्वराहस्वामिदीधितिः ॥ १५ ॥

(१३) तारकूटो रौप्यसमूहः पक्षे आरकूटो रीतिः । [गोपति-तार्क्ष्यकान्तिः रविगरुड़च्छविः पक्षे गोपतिरिन्द्रस्तस्य तार्क्ष्यस्तुरङ्गः । वामदेवगिरिः मनोज्ञमेरुः कैलासश्च । लोहितनीलौ पुष्कर हरिविद्रुमकमलकृष्णरत्नानि । सिन्दूरभूषणोत्पलधनञ्जयाम्भोजिनीपलाशानि । पुष्करं पद्मकाशयोः । हरिः सूर्य्यकृष्णयोः । विद्रुमः प्रवालविशिष्टवृक्षयोः । कमलं जलमलपद्मयोः । कृष्णरत्नं कौस्तुभेन्द्रनीलयोः । सिन्दूरभूषणं सिन्दूरालङ्कारगजयोः । उत्पल-मुत्कृष्टमांसेन्दीवरयोः । धनञ्जयोऽग्निपार्थयोः । अम्भोजिनी पलाशं पद्मपत्रपुटकिनीपत्रयोः । ] ?

(१४) कमलेति सूर्य्यकृष्णौ नागजित् गरुड़ो नागस्पर्द्धी च । सूर्य्यभूः सूर्य्योद्भवे यमश्च ।

(१५) तद्वत् दीधितिर्यस्य ।

१ गाङ्गेयच्छविपेशलः (S).

सुसम्पन्नमुखप्रभो विद्रूमणिदीधितिः ।
प्रवालप्रवलच्छायः कलभानुमितच्छविः ॥ १६ ॥

कलं कमलवद्वपुर्वहन्
पीतश्यामौ कृष्णाम्बरमधुजिद्ध्वान्तजेतारः ।
विद्युत्कान्तध्वान्तद्वेषि-
हरिस्वर्णवच्छायाः ॥ १७ ॥

(१६) प्रवालः प्रकृष्टो बालः केशः पक्षे विद्रुमः, कलभः करिशावकस्तद्वदनुमिताच्छविरस्य पक्षे कला शोभना भानुना सूर्य्येण मिता उपमिता छविरस्येति ।

(१७) कलं शोभनं कमलवत् पक्षे कमलकमणौ तयोरिव । कृष्णस्याम्बरं पीतवासः, कृष्णोऽम्बरमाकाशस्य । मधुजित् मधुस्पर्द्धी कृष्णस्य । ध्वान्तजेता ध्वान्तस्पर्द्धी सूर्य्यस्य । विद्युत्कान्तो मेघो विद्युत्कमनीयस्य । ध्वान्तद्वेषी ध्वान्तस्पर्द्धी सूर्य्यस्य । हरिःकृष्णः सूर्य्यस्य । स्वर्णवत् कनकवत् छाया यस्य पक्षे शोभना अर्णवस्येव जलधेरिवच्छाया यस्य ।

इति द्वितीयस्तवके उद्दिष्टवर्णनं नाम
प्रथमं कुसुमम ।

अथ श्वेतानि ।

सुधांशुशुभ्रैःश्रवः शम्भुकीर्त्तिज्योत्स्नाशरद्घनाः ।
प्रासादसौधतगरमन्दारद्रुहिमाद्रयः ॥ १ ॥
सूर्य्येन्दुकान्तकर्पूरकरम्भा रजतं हली ।
निर्म्मोकभस्मडिण्डीर[1]चन्दनं करका हिमम् ॥ २ ॥
हारोर्णनाभतन्त्वस्थिस्वर्गगण्डेभरदाभ्रकम्[2] ।
शेषाहिः शर्करा दुग्धं दधिगङ्गासुधाजलम् ॥ ३ ॥
मृणालसिकताहंसबककैरवचामरम् ।
रम्भागर्भः पुण्डरीकं केतकीशङ्खनिर्झराः ॥ ४ ॥

(१) अथ श्वेतानीति तगरं पुष्पभेदे । मन्दारद्रुर्मन्दारनामा वृक्षः हिमाद्रिर्हिमालयः ।

(२) सूर्य्यकान्तचन्द्रकान्तौ मणिभेदौ, करम्भा दधिशक्तवः हली बलभद्रः, निर्म्मोकः सर्पगात्रमुक्तकञ्चुकः, डिण्डीरोऽब्धिफेनः करका वर्षोपलः ।

(३) ऊर्णनाभतन्तुः मर्कटसूत्रम्, अस्थि कीकशं, स्वः स्वर्ग-भुवनं, गण्डः कपोलो विरहिणामेव बोद्धव्यम्, इभरदो हस्तिदन्तः, अभ्रकं गिरिजं, शेषाहिरनन्तः ।

(४) सिकता वालुका, कैरवं कुमुदं, निर्झरः प्रवाहः ।

---

१ भिण्डीर (A).　　　२ स्वर्गङ्गाइभराभ्रकं (S).

लोध्रसिंहध्वजच्छत्रचूर्णशुक्तिकपर्दकाः ।
मुक्ताकुसुमनक्षत्रदन्तपुण्योशनोगुणाः ॥ ५ ॥
कैलासकाशकार्पासहासवासवकुञ्जराः ।
नारदः पारदः कुन्दः खटिका स्फटिकादयः ॥ ६ ॥
ऋष्णानि केशवः सौरिचौरचन्द्राङ्कराहवः ।
बिन्ध्याञ्जनाद्रिहत्याहिवनभैरवराक्षसाः[1] ॥ ७ ॥
शिवकण्ठघनद्वैपायनरामधनञ्जयाः ।
शनिद्रुपदजाकालीकलिकोलयमासुराः ॥ ८ ॥

(५) लोध्रो वृक्षभेदः, चूर्णः चोदः, शुक्तिर्मुक्तास्फोटः, कपर्दको वराटः, उशनाः शुक्रः, गुणाः सत्त्वत्रिनयनयादयः ।

(६) वासवकुञ्जर ऐरावतः, पारदो रङ्गः, खटिका कठिनी, आदिशब्दात् क्षरदुग्धदधिसरस्वत्यगस्त्यसत्त्वगुणप्रभृतयः ।

(७) सौरी बलभद्रस्तस्य चौरं वस्त्रम्, अहिः सर्पः, वनमरण्यं, भैरवो रुद्रस्य वीरभद्रः भद्रमूर्त्तिः ।

(८) घनो मेघः, द्वैपायनो व्यासः, रामो दाशरथिर्भार्गवो वा, धनञ्जयो अर्ज्जुनः, शनिः शनैश्चरः, द्रुपदजा द्रौपदी, काली चामुण्डा, कलिस्तुरीयं युगं, कोलो वराहः, यमः शमनः, असुरा दैत्याः ।

[1] नरभैरवराक्षसाः (S).

केशकज्जलकस्तूरीराजपट्टविदूरजम्।
विषाकाशकुहूशस्त्रागुरुपापतमोनिशाः ॥ ९ ॥
मसीपङ्कमदम्भोधियमुनाधूमकोकिलाः।
गोलाङ्गुलास्यगुञ्जास्यकाकखञ्जनकेकिनः[1] ॥ १० ॥
गवलं तालतापिञ्छतिलेन्दीवरवल्लयः।
रसावद्भुतशृङ्गारौ कटाक्षोऽलिः कनीनिका ॥ ११ ॥
नीली जम्बूफलं मुस्ता काच[2]हत्याकुकीर्त्तयः।
भिल्लच्छाया गजाङ्गारखलान्तःकरणादयः ॥ १२ ॥

(९) राजपट्टं कानि-स्टणौतिख्यातं वासः, विदूरजं मणिभेदः, विषं गरलं, कुहूरमावस्या, शस्त्री कृपाणः, अगुरुर्गन्धभेदः, तमो ध्वान्तं तमोगुणो वा।

(१०) मसी कालिका, मदो दन्तिनां दानजलं, गोलाङ्गुलो वानरभेदस्तस्यास्यं मुखं, गुञ्जाफलस्य [आस्यं] मुखम्।

(११) गवलं माहिषं शृङ्गं, तापिञ्छस्तमालः, इन्दीवरं नीलोत्पलं, वल्ली लता, अलिः भ्रमरः, कनीनिका लोचन-मध्यतारा।

(१२) नीली वृक्षभेदः, हत्या कुवधः, भिल्लो निषादभेदः, छाया प्रतिबिम्बम् अनातपो वा, खलान्तःकरणं खलस्य मनः।

१ कपाठः खञ्जनकेकिनोः (S). २ काक (S).

नीलानि शुकशैवालदूर्व्वाबालतृणं बुधः ।
वंशाङ्कुरो मरकतेन्द्रनीलार्कहयादयः ॥ १३ ॥
शोणानि भौमतीक्ष्णांशुताम्रकुङ्कुमतक्षकाः ।
गुञ्जेन्द्रगोपखद्योतविद्युत्कुञ्जरबिन्दवः ॥ १४ ॥
दृगन्ताधरजिह्वासृङ्मांससिन्दूरधातवः ।
हिङ्गुलं कुक्कुटशिखा तेजः सारसमस्तकम् ॥ १५ ॥
माणिक्यं हंसचञ्चुवह्निशुकमर्कटयोर्मुखम् ।
चकोरकोकिलापारावतनेत्रनखाम्बयः[1] ॥ १६ ॥
कुङ्कुमकिंशुकाशोकजवाबन्धुकपाटलाः ।
कमलं दाडिमीपुष्पं विम्बं किम्पाकपल्लवौ ॥ १७ ॥

(१३) बुधो रौहिणेयः, वंशाङ्कुरः करीरं, मरकतेन्द्रनीलावुपलभेदौ, अर्कहयः सूर्य्यघोटकः आदिशब्दादतसीकलायकुसुमादयः ।

(१४) भौमः मङ्गलः, तक्षको नागभेदः, इन्द्रगोपः कार्पासकीटः, खद्योतो ज्योतिरिङ्गणः, कुञ्जरविन्दुः कुञ्जरगात्रस्थविन्दुः ।

(१५) दृगन्तोऽपाङ्गम्, असृक् रक्तम्, धातु गैरिकं, तेजः प्रतापः ।

(१७) किंशुकं पलाशपुष्पं, जवा ओड्रपुष्पं, विम्बं फलभेदः, किंपाको महाकालेति ख्यातं फलं, पल्लवो नवकिसलयः ।

---

१ मुखाम्बयः (S).

ताम्बूलरागो मञ्जिष्ठालक्तकं रक्तचन्दनम्।
त्रेता नखक्षतं क्षत्रधर्म्मरौद्ररसादयः ॥ १८ ॥
पीतानि ब्रह्मजीवेन्द्रगरुडेश्वरदृग्जटाः।
गौरौ द्वापरगोमूत्रमधुवीररसा रजः[1] ॥ १९ ॥
हरिद्रा रोचना रीतिगन्धके दीपचम्पके।
किञ्जल्कवल्कले शालिहरितालमनःशिलाः ॥ २० ॥
कर्णिकारं चक्रवाकवानरौ सारिकापदम्[2]।
केशवांशुकमण्डूकपरागकनकादयः ॥ २१ ॥

(१८) त्रेता द्वितीयं युगं, नखक्षतं नखाघातः, क्षत्रः क्षत्रिय-जातिः, तद्धर्म्मस्तज्जातिगुणः।

(१९) जीवो वृहस्पतिः, ईश्वरः शिवस्तस्य दृशो नेत्राणि, जटा कपर्द्दः, द्वापरस्तृतीयं युगम्, रजः रजोनामगुणः।

(२०) रोचना गोरोचना, रीतिः पित्तलं, गन्धकं वणिग्-द्रव्यभेदः, दीपः प्रदीपः, चम्पकः तत्कुसुम, किञ्जल्कः पुष्पाणां केशरः, शालिर्धान्यभेदः, मनः-शिला गिरिजधातुभेदः।

(२१) कर्णिकारं आरग्वधकुसुमं, सारिका पक्षिभेदस्तत्पदम्, केशवस्य हरेरंशुकं वस्त्रं, परागः कौसुमरेणुः।

१ मधुवीररसासवः (A). २ सारिकाञ्चयः (S).

धूसराणि रजोलूताकरभो गृहगोधिका ।
कपोतमूषिकौरङ्कुकाककण्ठखरादयः ॥ २२ ॥

उपमेयस्य शोभातिशयख्यापनाय कयापि युक्त्या विशेषणै-रलङ्कृतमुपमानं कुर्व्वीत । तद्यथा ;—

सुरनिकरकराग्रव्यग्रमन्थानशैल-
क्षुभिततरलदुग्धाम्भोधिकल्लोलकान्तिः ।
तुहिनगिरितनूजानम्रभूतेशचूड़ा-
गलितगगनगङ्गाधौतशीतांशुगौरः ॥ २३ ॥

हिमकिरणमरीचिव्यूहविभ्राजमान-
क्षितिधरपतिचूड़ाजाह्नवीकल्पकान्तिः ।
गिरिशमुकुटचन्द्रज्योतिरुद्योतमान-
स्फटिकशिखरिशृङ्गस्पर्द्धमानाङ्गकान्तिः ॥ २४ ॥

इति श्वेतानि ।

मुकुटगलितगङ्गानीरकल्लोलमाला-
स्नपितगिरिशकण्ठस्पष्टरुग्देहयष्टिः ।
अभिनवजलवाहव्यूहधाराविमुक्ता-
ञ्जनशिखरिगरीयः शृङ्गतुङ्गाङ्गलक्ष्मीः ॥ २५ ॥

(२२) रजो धूलिर्लूता मर्कटः, करभः उष्ट्रः, रङ्कुो रङ्कुकम्, खरो गर्द्दभः ।

(२४) स्फटिकशिखरी कैलासः ।

दिनपरिवृढपुत्रीगर्भनीलारविन्द-
प्रसृमरमधुपालीपक्षतिप्रस्थलक्ष्मीः।
जलशयनशरीरस्फाररोचिः प्रपञ्च-
च्छुरितसरिदधीशभ्राजमानाङ्गयष्टिः॥ २६॥

इति कृष्णम्।

मसृणघुसृणपङ्काभ्यङ्गचञ्चन्मृगाक्षी-
कुशकलशपिधानोद्दामकौसुम्भकान्तिः।
तरुणतरणिकान्तिव्रातसंसर्गरक्त-
कमलदलनिकायप्रायकायप्रभोर्म्मिः॥ २७॥
अभिनवरविरश्मिद्योतितप्राच्यभूभृ-
च्छिखरलसदशोकस्मेरपुष्पोपमानः।

(२६) दिनपरिवृढः सूर्य्यस्तत्पुत्री यमुना, "पक्षतिः पक्षमूले स्यात्" जलशयनः कृष्णः, प्रपञ्चो विस्तारः, छुरितो मिश्रितः, सरिदधीशः समुद्रः।

(२७) मसृणं स्निग्धं, घुसृणं कुङ्कुमम्, अभ्यङ्गो लेपः, पिधानमाच्छादनम्, कौसुम्भं कुसुम्भरक्तम्, व्रातः निकायः समूहः, प्रायः सदृशः, प्रभोर्म्मिः प्रभाश्रेणी।

(२८) प्राच्यभूभृदुदयपर्व्वतस्तस्य शिखरं शृङ्गं, स्मेरं विकसनशीलं, कर्णोत्तंसः कर्णभूषणम्।

परिकुपितमृगाक्षीलोचनप्रान्तरोचि-
स्फुरितकमलकान्तोत्तंससङ्काशकान्तिः ॥ २८ ॥

इति रक्तम्।

मधुरिपुपदनिर्यज्जाह्नवीवारिपूर-
स्नपितगरुडपक्षप्रख्यसंलक्ष्यकान्तिः।
तरुणकिरणमालिस्फुर्जदंशुप्रवाह[1]
स्मितकनकसरोजव्यूहतुल्याङ्गकान्तिः ॥ २९ ॥
जलधरनिकुरम्बोद्दामधारानिपात
स्नपितकनकशैलस्पर्द्धिवर्द्धिष्णुकान्तिः।
तरुणतरमृगाक्षीगण्डरोचिः प्रपञ्च-
स्फुरितकनककर्णोत्तंससङ्काशकान्तिः ॥ ३० ॥

इति पीतम्।

इत्यादि सदृशं सदृशेनोपमेयम्।

(२९) निर्यन् निर्गच्छन्, पूरः प्रवाहः, प्रख्यः सदृशः, किरणमाली सूर्य्यः, अंशुप्रवाहः किरणश्रेणी।

(३०) निकुरम्बः समूहः, उद्दामो महान्, आप्रसरणशीलः।

---

१ स्फुर्जदंशुप्ररोह (S).

भ्रमरनिकरयाच्ञाविस्फुरत्कामधेनु-
स्तनगलितपयोवद् भारती भाति यस्य ।
हिमकिरणमयूखव्रातभिन्नेन्दुकान्त-
प्रसरदमृततुल्या यस्य वाचो विभान्ति ॥ ३१ ॥
दनुतनुजविपक्षक्षुब्धदुग्धाब्धिगर्भो
ल्लसदमृतसमाना रेजिरे यस्य वाचः ।
मदनदहन[१]चूडाचन्द्ररोचिष्णुगङ्गा-
लहरिभरसनाभिः शोभते यस्य वाणी ॥ ३२ ॥

(३१) भिन्नः प्रस्रुतः इन्दुकान्तश्चन्द्रकान्तश्चन्द्रमणिः ।

(३२) क्षुब्धः क्षोभं दधातीति अन्यथा इटि क्षोभित इति स्यात्, मदनो मनोहरः, सनाभिः सदृशी ।

इति द्वितीयस्तबके वर्ण्यवर्णनं नाम
द्वितीयं कुसुमम् ॥

---

१ मदनदमन (S).

सम्पूर्णगर्भवृत्तानि मुखपद्मेन्दुदर्पणाः।
चक्रावहट्टतिलकमृदङ्गपुटशाणकाः॥ १॥
आवर्त्तकमठौ लूतागृहच्छत्रमपूपकम्।
आलवालमहीजालचर्मकं स्थालकादयः॥ २॥
वृत्तानि वाहुनारङ्गस्कन्धधम्मिल्लमोदकाः।
रथाङ्गलावककुद[1]कुम्भिकुम्भाण्डकादयः॥ ३॥
कर्णपाशभुजापाशाकृष्णचापघटाननम्।
मुद्रिकापरिखायोगपट्टहारस्रगादयः॥ ४॥

(१) सम्पूर्णेति सम्पूर्णो गर्भोऽभ्यन्तरं येषां एवंभूतानि वर्त्तुलानि वस्तून्यभिधीयन्ते, मुखपद्मेत्यादि वक्त्रं यथावय[व]स्य चक्रास्त्रं व अवहट्टं चुद्रविपणिः, शाणकमस्त्राणामुत्तेजनयन्त्रम्।

(२) आवर्त्तो जलभ्रमिः, लूता गृहं मर्कटानां तन्तुमयकोशः अपूपकं पिष्टकभेदः, आलवालं वृक्षमूले जलार्थकृतो गर्त्तः "स्यादाल वालमावालमित्यमरः" जालं मत्स्यधारणार्थतन्तुनिर्मितम् "आनायः पुंसि जालं स्यादित्यमरः" चर्मकं फलकं, स्थालकं भोजनपात्रम्।

(३) स्कन्धधम्मिलः स्कन्धकेशः, मोदकं लड्डुकभेदः, रथाङ्ग-श्चक्रवाकः, लावः पक्षिभेदः, ककुदो वृषाणामवयवभेदः, कुम्भिनो गजस्य कुम्भः, अण्डकं पक्ष्यादेरण्डकम्, आढ़क इति पाठान्तरम्।

(४) कर्णपाशः कर्णशष्कुल्या अधोभागः, भुजापाशः उपगूह-नादौ भुजयोरावेष्टनाद्याकारो भवति, आकृष्टचापं कुण्डलित-

[1] रथाङ्गलावककुद (S).

त्रिकोणानि हलेशाक्षिकामाख्यावह्निमण्डलाः ।
सन्ध्यक्षराद्यदम्भोलिशृङ्गाटशकटादयः ॥ ५ ॥
वक्राण्यलकभालभ्रूनखाङ्कोकुशकुञ्चिकाः ।
भग्नकङ्कणवालेन्दुदात्रकुद्दालचन्द्रकाः ॥ ६ ॥
शुकास्यं किंशुकं विद्युत्कटाक्षेन्द्रधनुःफणाः ।
पुरोधःकरकोलेभदन्तसिंहनखादयः ॥ ७ ॥
तीक्ष्णानि प्रतिभाचौरकटाक्षा दुर्वचोनखाः ।
गुरूणि सन्मनःश्रोणिकपाटस्तनबुद्धयः ॥ ८ ॥

कोदण्डः, घटाननं घटस्य मुखम्, मुद्रिका अङ्गुलिगोमुद्रिका अङ्गुरीयकमिति यावत् । परिखा ग्रामाणां परितो जलाशयभेदः योगपट्टं योगटा इति ख्यातं, स्रक् माला ।

(५) ईशाक्षि शिवतृतीयलोचनं, कामाख्या त्रिकोणाकारं योनिचक्रं, वह्निमण्डलं आगमशास्त्रे सिद्धं त्रिकोणतया ऐ औ स्वरूपाणामागमशास्त्रप्रसिद्धानां सन्ध्यक्षराणामाद्यएकारः, दम्भोलि- र्वज्रं, शृङ्गाटं पानीयफलं सिंघाड़ा इति ख्यातं, शकटं रथः ।

(६) वक्राणीति अलकाश्चूर्णकुन्तलाः, भालं ललाटं, नखाङ्को नखक्षतं, कुञ्चिका कपाटोद्घाटनी, दात्रं तृणच्छेदकं, चन्द्रको मयूरपुच्छस्थः [ चिह्नविशेषः ] ।

(७) किंशुकं पलाशकुसुमं, पुरोधसः करः पुरोधःकरः उपाध्यायहस्तः, कोलदन्तः शूकरदन्तः, इभदन्तः हस्तिदन्तः ।

(८) तीक्ष्णानीति प्रतिभा बुद्धिविशेषः प्राक्तनसंस्कारो वा दुर्वचो दुष्टवचनम् ।

सुखदानि शशी गीतपुष्पलक्ष्मीसुतोद्भवाः ।
नष्टाप्तिस्वस्पृहालब्धिवियुक्तप्रियसङ्गमाः ॥ ९ ॥
दानस्वातन्त्र्यसन्मित्रविद्यासन्तोषमुक्तयः ।
दुःखानि पारतन्त्र्याधिव्याधिमानच्युतिद्विषः ॥ १० ॥
कुभार्य्यानैस्व[1]कुग्रामवासकुस्वामिसेवनम् ।
कन्याबहुत्ववृद्धत्वे निवासः परवेश्मनि ॥ ११ ॥
वर्षाप्रवासो द्वे भार्य्ये कुभृत्योर्द्धहलं कृषौ ।
स्थिराण्याजौ भटः साध्वी धर्म्माधर्म्मौ सतां मनः ॥ १२ ॥
अस्थिराण्यबलादोलापाङ्गयौवनदुर्ज्जनाः ।
स्वामिप्रसादेभकर्णस्वप्नमत्स्यकपिश्रियः ॥ १३ ॥

(९) सुखदानीति लक्ष्मीः सम्पत्, सुतः [पुत्र]स्तयोरुद्भवः, नष्टाप्तिः नष्टस्य वस्तुनो ऽवाप्तिः, स्वस्पृहालब्धिः सुमनोरथावाप्तिः, वियुक्तानां विरहिणां प्रियजनेन समागमः ।

(१०) मुक्तिः निःश्रेयसं, पारतन्त्र्यं पराधीनता, आधिर्मानसी व्यथा, मानच्युतिः सम्मानभंग्नः, द्विषः शत्रवः ।

(११) नैस्वं दारिद्र्यं, कन्याया बहुत्वं वृद्धत्वञ्च ते तथा ।

(१२) आजौ संग्रामे, भटः योधः, साध्वी पतिव्रता ।

(१३) अबला स्त्री, अपाङ्गं नेत्रान्तः, श्रीः सम्पत् ।

---

१ कुभार्य्यास्वकुग्राम (A).

मन्दगानि शनिर्म्मानी वृषहंसगजस्त्रियः।
क्रूरस्वराः काकवृकवराहोष्ट्राश्वगर्द्दभाः॥ १४॥
बलिष्ठान्यनिलो विष्णुर्गरुड़ो हनूमान् यमः।
महावराहः शरभः सत्प्रतिज्ञो गजः पृथुः॥ १५॥
हली वाली बलिर्भीमः सती शेषः पुराकृतम्।
सुरूपा नकुलैलाश्विनलकूवरमन्मथाः॥ १६॥
उष्णाणि स्मरतापाधिप्रतापा दुर्व्वचस्तपः।
मधुराणि विदग्धोक्तिप्रियाधरशशित्विषः॥ १७॥

(१४) शनिः ग्रहः, ज्ञानी तत्त्वज्ञः, वृको व्याघ्रविशेषः।

(१५) शरभो जन्तुभेदः, पृथुः वेण्यः।

(१६) हली बलभद्रः, वाली सुग्रीवभ्राता, बलिः वैरोचनिः, भीमः शिवः पार्थो वा, सती दक्षकन्या, शेषो नागराजः, पुराकृतं प्राक्तनं कर्म्म, सुरूपाः सुन्दराः, नकुलो माद्रीसुतः, ऐलो नृपभेदः पुरूरवा इति ख्यातः, अश्विरश्विनीकुमारः, नलकुवरः कुवेरपुत्रः, मन्मथः कामः।

(१७) स्मरतापः कामजन्यज्वरः, आधिर्मानसीव्यथा, तपः शरीरक्लेशजनितसुकृतं, विदग्धो रसिकस्तस्योक्तिः, प्रियायाः स्त्रियोऽधरः, शशित्विषो ज्योत्स्नाः।

अथारोप्यगुणाः ।

औदार्य्यधैर्य्यगाम्भीर्य्यशौर्य्यसौन्दर्य्यशक्तयः ।
माधुर्य्यैश्वर्य्यचातुर्य्यमर्य्यादाक्रौर्य्यकीर्त्तयः ॥ १८ ॥
तेजस्तारुण्यषाड्गुण्यसौलक्षण्यरणज्ञताः ।
ब्रह्मण्यदानदाक्षिण्यशीलशौचसुवेषताः ॥ १९ ॥
सत्यौचित्यकलावत्वमान्यभक्तिकृतज्ञताः ।
दृढ़प्रतिज्ञता प्रज्ञा श्रद्धामेधोद्यमक्षमाः ॥ २० ॥
दयानयार्जवाचारसन्तोषमितभाषिताः ।
विद्याविवेकविनयारोग्यसौभाग्यवक्तृताः ॥ २१ ॥
उत्साहित्वकुलीनत्वनिर्दोषत्वमहेच्छताः ।

(१८) अथ आरोप्या असम्भवा अपि ये गुणा आरोप्यनायके वर्त्तन्ते ।

(१९) षाड्गुण्यं सन्धिविग्रहादि, सौलक्षण्यं सामुद्रकशास्त्रोक्त-लक्षणत्स्त्रीपुरुषयोः सुलक्षणत्वं [रणज्ञता] रणेषु तेषामभिज्ञत्वं, ब्रह्मण्यता ब्रह्मण्यो ब्राह्मणभक्तस्तस्य भावः ।

(२०) मेधा धारणावती बुद्धिः ।

(२१) मितभाषिता अबहुभाषित्वं ।

स्वाराध्यतोषकारित्वाभयास्तिक्येङ्गितज्ञताः ॥ २२ ॥
प्रसादप्रतिभाधृष्योऽभिगम्यसुसहायताः ।
श्रीमाहात्म्यमहारम्भनिर्दम्भत्वाघभीतताः ॥ २३ ॥
बहुश्रुतत्वसौजन्यपरिच्छेदाप्रमादिताः ।
जितेन्द्रियत्वागर्व्वत्वधर्म्माकत्थनतादयः ॥ २४ ॥

अथ सर्व्वाङ्गवर्णनम् ।

प्रपदाङ्घ्रिगुल्फपार्ष्णिजङ्घाजानूरुवंक्षणम् ।
कटित्रिकनितम्बस्फिक्वस्त्युपस्थककुन्दरम् ॥ २५ ॥

(२२) स्वाराध्यता सुखाराधितत्वं, आस्तिक्यं वेदस्मृतिषु [श्रद्धालुत्वं] इङ्गितज्ञता परेषामभिप्रायानुसरणम् उपदेशमात्रेणैव ज्ञानं वा ।

(२३) अधृष्योऽनभिभवनीयः सुसहायश्च एतेषां भावः, अघभीतता पापाद्भयम् ।

(२४) अप्रमादिता अवहितत्वं, धर्म्माकत्थनता प्राणान्तेऽपि स्वधर्म्माकत्थनम् ।

(२५) प्रपदं पादाग्रं, गुल्फः पादयोरुभयतो ग्रन्थिः, पार्ष्णिः पादयोरुभयतः पार्श्वद्वयं, वंक्षणमूर्व्वोः सन्धिभागः, उरो वक्षोदेशः ।

जघनं जठरं नाभिवलिवक्षोजचूचुकम् ।
क्रोड़ोरोजत्रुपृष्ठांसकक्षदोःपार्श्वमध्यमम् ॥ २६ ॥
प्रगण्डः कूर्परो हस्तः प्रकोष्ठो मणिबन्धनम् ।
अङ्गुल्यङ्गुष्ठकरभनखपर्व्वचपेटकम् ॥ २७ ॥
कण्ठः शिरोधरा श्मश्रुमुखौष्ठचिवुकं हनुः ।
सृक्कतालुरदाजिह्वानासाभ्रूगण्डलोचनम् ॥ २८ ॥
अपाङ्गस्तारकाकर्णभालमस्तकमूर्द्धजाः ।
यथासम्भवमेतेषु वर्ण्यं स्त्रीपुंसयोर्बुधैः ॥ २९ ॥

(२६) जत्रुः संयोगयोः सन्धिभागः, अंसः स्कन्धः, कक्षो बाह्वोर्मूलं, दोर्बाहुः, पार्श्वं कक्षयोरधः ।

(२७) कूर्परः कफोणिस्तदुपरिभागः प्रगण्डः, प्रकोष्ठः कूर्परादधोभागः, मणिबन्धनं करप्रकोष्ठयोः सन्धिः, अङ्गुष्ठो वृद्धाङ्गुलिः, करभः "मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः" पर्व्वाणि अङ्गुलीनां सन्धयः, चपेटकं करतलम् ।

(२८) शिरोधरा ग्रीवा, श्मश्रु मुखलोम्नि वर्त्तते, अधरस्याधश्चिवुकं, गण्डस्य परभागो हनुः, प्रान्तयोरोष्ठस्य सृक्कणी ।

(२९) अपाङ्गो नेत्रयोरन्तः, तारका चक्षुर्मध्यं, भालं ललाटं, मूर्द्धजः केशः ।

अथ खण्डश्लेषाः।

विप्रपदमनोहरविष्णुवक्षःस्थलवत्। द्विपादरचित-स्थितिनृपवत्। सदाचरणस्थितिं विभ्रत् भूमिवत्। गूढपादग्रन्थिमन्दिराकर्षणरज्जुवत्। शुद्धपार्ष्णिविजिगीषुवत्। जङ्घालसत्कान्तिश्चन्द्रवत्। सज्जानुगतवैभवो[1]

अथ गूढपदव्याख्यायां— ——पण्डितैः प्रपदमित्यादिमूर्द्धज-पर्य्यन्तेष्ववयवेषु स्त्रीपुंसयोर्लक्षणं वर्ण्यं वर्णनीयम्।

विप्रेति विशिष्टं प्रपदं पादाग्रं, "पादाग्रं प्रपदमित्यमरः" विप्रपदाघातचिह्नञ्च।

द्विपदाभ्यां रचिता स्थितिः स्थानं शोभा येन पक्षे द्विपे हस्तिनि च आदरो रागस्तेन चिता व्याप्ता स्थितिः स्थानं येन "स्थितिस्थैर्य्यावकाशे च स्थानमर्य्यादयोरपि चेति रत्नकोषः"।

चरणस्थितिः पक्षे रणस्थितिर्युद्धस्थैर्य्यं सदा सर्व्वदा, च पूरणे।

गूढः स्वल्पः पादग्रन्थिर्गुल्फो यस्य पक्षे गूढपादः सर्पस्तस्य ग्रन्थिर्यत्र।

शुद्धा निर्द्दोषा पार्ष्णिः पादपार्श्वद्वयं यस्य पक्षे शुद्धः शुचिः पार्ष्णिः पृष्ठवर्त्ती राजा यस्य तथा च "पार्ष्णिग्राहस्तु पृष्ठतः"।

जङ्घायां प्रसृतायां लसन्ती कान्तिः शोभा यस्येति "जङ्घा तु प्रसृतेत्यमरः" पक्षे जङ्घाला धावनशीला सत्कान्तिर्यस्येति।

सज्जानुना जङ्घोपरिभागेन गतं प्राप्तं वैभवमुत्कर्षो येन पक्षे सज्जैर्धनादिद्रव्यैरनुगतवैभवः।

1 सज्जानुरचितवैभवो धनिकवत् (A).

धनिकवत्। रम्योरुकान्तिः कन्दर्पवत्। सुवङ्क्षणेन हर्षयन् गणेशवत्। कटिकान्तस्थितिं बिभ्रन्नृपतिवत्। सचिकामोदितयज्ञपुरुषवत्। सदामनितम्बालङ्कृतो नन्दकुमारवत्। नवस्तिमितकान्तिराषाढान्तरम्य-भूभागवत्। सुधीरोपस्थामोदितोऽर्ज्जुनवत्। नवककुन्द-

रम्या उर्व्वोः कान्तिर्यस्य पक्षे रम्या उरुर्महती कान्तिरस्येति।

सुवङ्क्षणेन उर्व्वोरुपरिसन्धिभागेन पक्षे सुवं मातरं क्षणेन उत्सवेन हर्षयन्।

कव्याः कटीदेशस्य कान्ता शोभा पक्षे कटो गण्डोऽस्यास्तीति कटी हस्ती तत्र कान्तां स्थितिं बिभ्रत्।

सत् प्रशस्तं यत् चिकं तेन आमोदितः पक्षे सचिणो गृह-मेधिनः कामाय उदितः।

दाम शृङ्खलं तेन सहितः नितम्बः तेनालङ्कृतः पक्षे दाम्ना पशुरज्ज्वा "स पुंसि दाम संदानं पशुरज्जुस्तु दामनीत्यमरः"।

नवा स्तिमिता परिमिता कान्तिर्यस्य पक्षे नवा स्तिमिता सद्य आर्द्रभावमापन्ना कान्तिरस्य।

सुधीर उन्मादरहितो य उपस्थस्तेनामोदितो हृष्टः पक्षे सुधीः शोभना धीः रोपो वाणः स्थाम दर्पस्तैरुदितः।

नूयते स्तूयतेऽसाविति नवः नवेन प्रशस्तेन ककुन्दरेण चिता प्राप्ता शोभा येन पक्षे नवकं नूतनं यत् कुन्दं पुष्पभेदस्तेन चितशोभः।

रचितशोभः शिशिरवत्। सर्व्वदारोहपेशलः सुभगवत्। सज्जघनो वर्षाकालवत्। सदा पिचण्डसंरम्भो नृपतिवत्। नाभिभूतस्थितिं वहन् मनस्विवत्[१]। द्विपयोधरसाटोपो नृपवत्। कुचेष्टाभोगभासुरोऽधमवत्। मञ्जुलकुचाग्रं विभ्रद्वनवत्। उच्चैरङ्कसमन्वितो दुःकालवत्।

सर्व्वदा आरोहेण जघनेन पेशलः शोभनः पक्षे सर्व्वेषां दारूणां ऊहे तर्के पेशलः दक्षः।

सन् प्रशस्तो जघनो यस्य पक्षे स उत्तमो घनो मेघो यत्र।

पिचण्डं जठरं तेन संरम्भो यस्य पक्षे सदापि सर्व्वदापि चण्डः संरम्भो यस्य सः।

नाभौ भूता जाता या स्थितिः तां पक्षे अभिभूतः पराभूत स्तस्य स्थितिं वहन्।

द्विपयोधराभ्यां साटोपः पक्षे द्विपो हस्ती योधो भटस्ताभ्यां रसायां पृथिव्यां आटोपो यस्य।

कुचयोरिष्टोऽभिमतो य आभोगः परिपूर्णता तेन भासुरः शोभनः पक्षे कुत्सितौ यौ चेष्टाभोगौ ताभ्यां भासुरः।

मञ्जुलं कुचाग्रं चुचूकं यस्य पक्षे मञ्जुलः शोभनो यो वञ्जुलस्तद्भेदस्तेनाग्रः श्रेष्ठः।

उच्चैर्महान् अङ्कः क्रोड़स्तेन समन्वितः पक्षे रङ्को दीनः, दुःकालो मंहार्घकालः।

---

१ धृतबालशोभिवहन् कैवर्त्तवत् (A):

स्पष्टमुत्सङ्गपेशलः प्रातश्चक्रवत्। रम्योरोमान्वितो रल्लकवत्। सदादीर्घपृष्ठविराजितः पातालवत्। समांसरुचिः सिंहवत्। नवकक्षान्तः श्येनवत्। विभुजातिमनोरमो नृपवत्। सुपार्श्वभूषितो रावणवत्। विलसन्मध्यमः स्वरसमूहवत्। अधिकप्रगण्डभूषितो-

स्पष्टं यथा स्यात् तथा उत्सङ्गेन क्रोड़ेन पेशलः पक्षे स्पष्टा मुत्प्रमोदो यस्य स तथा सङ्गेन चक्रेण वीरादियोगेन पेशलः।

रम्यं यत् उरो वक्षस्तस्य या [मा] शोभा तया अन्वितः पक्षे रम्यो मनोज्ञो रोमान्वितः रल्लकः "रल्लकं कम्बलं प्राहुः"।

दीर्घं यत् पृष्ठं तेन विराजितः पक्षे दीर्घः पृष्ठः स्पर्शः सर्पः।

समौ यावंसौ ताभ्यां रुचिः शोभा यस्य पक्षे मांसे या रुचिस्तया सहितः।

नवः प्रशस्यः कक्षान्तो यस्य, अन्तःस्वरूपं पक्षे नवके न क्षान्तः न तितिक्षुः।

विशिष्टेन भुजेन अतिमनोरमः पक्षे विभुजातिः प्रभुजातिः।

सु सुष्ठु पार्श्वः पृष्ठभागः पक्षे रावणविशेषः।

विलसन् मध्यमो यस्येति पक्षे विलसन् मध्यमः स्वरविशेषः, "निषादर्षभगान्धारषड्जमध्यमधैवताः पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वरा इत्यमरः"।

अधिकं यथा स्यात् तथा प्रगण्डः कूर्परः आस्कन्धभागः तेन भूषितः "आस्योपरि प्रगण्डः स्यादित्यमरः" पक्षे अधिकः अधिकतमं प्राप्तः कम्पनशीलः गण्डः गण्डकः वनजन्तुभेदस्तेन भूषितः।

ऽरण्यवत्। उल्लसत्कफोणिमाधारो राजरोगिवत्। प्रहस्तस्थितिपेशलो रावणसैन्यवत्। करभासितो विन्ध्यपरिसरवत्[1]। विप्रकोष्ठस्थितिः प्रणववत्। नखर-स्थितिभासुरः शिशिरार्कवत्। सुपर्व्वभूषितो मेरुवत्।

उल्लसन्तौ कफोणिः कूर्परस्य या मा श्रीस्तां धारयतीति पक्षे उल्लसन् कफ उद्भवश्लेष्मदोषस्य अणिमाधारः कृशताधारः श्लेष्माभि-भावेण कृशाङ्गतामाश्रितइत्यर्थः राजरोगी सन्निपाती यक्ष्मा-भिभूतो वा।

प्रहस्तः प्रकृष्टो हस्तः तस्य स्थितिस्तया पेशलः पक्षे प्रहस्तो रावणमन्त्री तस्य स्थितिः।

करेण भासितः शोभितः पक्षे करभैः उष्ट्रैः "करभाः स्युः शरभूषका इत्यमरः" आसितः अधिष्ठितः आसङ् उपवेशने अधिशीङ् स्थासां कर्मेत्याधारस्य कर्मत्वात् कर्मणि क्तः।

विशिष्टेन प्रकोष्ठेन कूर्पराधोभागेन स्थितिः शोभा, पक्षे विप्रकः द्विजश्रेष्ठस्तस्योष्ठे स्थितिर्यस्य। प्रणव ॐकारः।

नखराणां नखानां स्थितिः पक्षे नखरा तीक्ष्णा स्थितिस्तया भासुरः।

शोभनं पर्व्वाणि सुपर्व्वाणि पक्षे सुपर्व्वाणो देवाः तैर्भूषितः।

---

१ करभान्वितो विन्ध्यपरिसरवत् (S).

उच्चपेटस्थितिस्ताम्बूलिकपण्यवत्। अधिकण्ठमनोहरो मन्त्रवत्। गलच्छायासुन्दरः कृष्णपक्षेन्दुवत्। उल्लसितशिरोधरान्वितो वनवत्। सुग्रीवोदितवैभवो रामवत्। अधिकन्धरान्वितो नृपवत्। सदाश्मश्रुतः कान्तः पर्व्वतवत्। स्फुरन्महादंष्ट्रिकान्तःपल्वलवत्। मुखरो-

उद्यच्छन्ती चपेटकस्य केवलस्य कवकस्य स्थितिः शोभा यस्य पक्षे उच्चम् उन्नतं पेटकं पेडीति ख्याता तत्र स्थितिर्यस्येति।

अधिकं कण्ठेन मनोहरः पक्षे कण्ठः ध्वनिः पिको वा तद्वत् मनोहरः।

गलच्छायया सुन्दरः पक्षे गलन्ती या छाया तया असुन्दरः।

उल्लसिता ऊर्द्धीकृता या शिरोधरा तया अन्वितः पक्षे उल्लसितं शिखरं यस्य एवम्भूतो धरो गिरिस्तेनान्वितः।

सुष्ठु ग्रीवा तया उदितं वैभवं यस्येति पक्षे सुग्रीवो वानरराजः।

अधि अधिकं कन्धरया अन्वितः पक्षे अधिकं धरया पृथ्व्या अन्वितश्च।

सदा श्मश्रुतो मुखलोमतः कान्तः पक्षेऽश्मना प्रस्तरेण श्रुतः ख्यातः कान्तः कमनीयश्च।

स्फुरन्तः ये महादंष्ट्रिणः वराहादयः तैः कान्तः अथवा स्फुरन् महादंष्ट्रिकैः कान्तः मध्यो यस्य।

चितवैभवः कथकवत् । पृथुलास्य-मनोहरो नर्त्तकवत् । बहुधावदनस्थितिः सैन्यवत् । अधिकाननरोचिष्णु-र्गिरिवत् । मधुराधरः कृष्णबाहुवत् । हनूमद्विभवान्वितो रामवत् । महास्तकायशोभितो नृसिंहनखाग्रवत् ।

मुखमाननं तेन रोचितं वैभवं यस्य पक्षे मुखरेषु उचितं वैभवं यस्य ।

पृथुलं महत् आस्यम् आननं तेन मनोहरः पक्षे पृथुलं लास्यं नृत्यं तेन ।

बहुधा वदनेन स्थितिः शोभा अस्य पक्षे बहूनां वदनानां स्थितिर्यत्र ।

अधिकं यथा तथा आननं मुखं तेन रोचिष्णुः पक्षे कानने इति अधिकाननं तत्र रोचिष्णुः ।

मधुरो मनोज्ञोऽधरो यस्य पक्षे मधुरां मधुरानाम्नीं पुरीं धरतीति धृ धारणे इत्यस्य मधुरानगरीप्रभेदः कृष्णबाहुवदिति कृष्णबाहुर्गदरः [अथवा] मधुराधरः मधुनामानमसुरं राध्यति हिनस्ति इति राध् हिंसायामिति ।

हनूमान् यः विभवः शरीरसम्पत् तेन अन्वितः पक्षे हनूमतः विभवः तेन अन्वितः ।

महती सृक्कणी यस्य महासृक्का अयः शुभावहो विधिस्तेन शोभितः पक्षे महान्ति असृञ्जि रक्तानि यत्र एवम्भूतो यः [कायः] दैत्येन्द्रदेहस्तेन शोभितः ।

सुसम्पन्नसुतालूनो रेणुका-शिरोवत् । उच्चैरदनभासुरो[१] बालवत् । रसज्ञानवर्द्धिसमुत्साहो धातुवादिवत् । कलयन् नासिकास्थितिं पान्थवत् । नवभूचितः शिशुपालवत् । सदारङ्गण्डाभो वणिग्वत् । सदालोचन-

सुसम्पत् सुष्ठुसम्पत् तालु तेन ऊनः नेतिपदच्छित्तये तु योजना पक्षे सुसम्पन्नः यः सुतः परशुरामस्तेन आलूनश्छिन्नो रेणुका यमदग्निदयिता ।

उच्चैः श्रेष्ठाः ये रदना दन्ताः, "रदना दशना दन्ता इत्यमरः" पक्षे उच्चैर अदनं भक्षणं तेन भासुरः शोभमानः ।

रसज्ञा जिह्वा, "रसज्ञा रसना जिह्वेत्यमरः" तस्या नवा नूतना ऋद्धिः समृद्धिः तया समुत्साहः पक्षे रसज्ञानं पारदजारणज्ञानं वर्द्धयतीति तथा समुत्साहो यस्येति ।

नासिका नासा, "घोणा नासा च नासिका इत्यमरः" तस्याः स्थितिं कलयन् पक्षे नासिका एकचस्था तत्स्थितिं न कलयन् ।

नवा या भूः तया उचितः समवेतः पक्षे नेति पदं च वभ्रूर्यादवभेदस्तत्र सोचितो योग्यः शिशुपालस्तस्य दारापहरणात्, "आलप्यालमिदं वभ्रोर्यत्स दारानपाहरदिति माघोक्तेः" ।

सदा रङ्गन्तौ उद्यन्तौ गण्डस्य [आभा यस्य] पक्षे गण्डो गण्डकवालपिलूपायनगण्डके पदकानां परिमाणभेदः ।

सदा नित्यं लोचनाभ्यां भासुरः पक्षे आलोचनं तेन भासुरः ।

---

१ उच्चैर्दनभासुरो बालवत् (S).

भासुरो मन्त्रिवत्। सुदर्शनमनोहरो मयूरवत्[१]। उल्लसितारामो वसन्तवत्। अधिकर्णस्थितिं वहन् दरिद्रवत्। वहन् वैश्रवणस्थितिं कैलासवत्। उच्चैः-श्रवःस्थितिं वहन् इन्द्रवत्। प्रतिभालासितस्थितिं विभ्रत् कविवत्। अलिकान्तस्थितिं विभ्रत् पद्मवत्।

सुष्ठु दर्शनं अवलोकनं तेन मनोहरः पक्षे सुदर्शनं चक्रम्।

उल्लसिताः आ समन्तात् रामाः स्त्रियः "रामावामावामनेत्रा पुरन्ध्रीनारीति हलायुधः" पक्षे उल्लसित आरामो येनेति।

अधि अधिकं कर्णस्य राधेयस्य वा स्थितिं वहन् पक्षे अधिकां ऋणस्थितिं वहन्।

वै इति अव्ययं निश्चयार्थे श्रवणस्थितिं वहन् पक्षे वैश्रवणः कुवेरः "किन्नरेशो वैश्रवण इत्यमरः" तस्य स्थितिं वसतिम्।

उच्चैरिति श्रवःस्थितिविशेषणं श्रवसोः कर्णयोः स्थितिं वहन् "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवइत्यमरः" पक्षे उच्चैःश्रवा नाम इन्द्रघोटकः "हयउच्चैःश्रवा इत्यमरः"।

प्रतिभालं भाले ललाटे आसिता स्थिति र्यस्य पक्षे प्रतिभा प्राक्तनसंस्कार स्तेन लासिता प्रकाशिता स्थितिः शोभा यस्य।

अलिकं ललाटं "ललाटमलिकं गोधीत्यमरः" तस्य अन्तः मध्यं तत्र स्थितिं पक्षे अलीनां भ्रमराणां कान्तस्थितिं संस्थितिम्।

---

१ सुदर्शनमनोहरो विष्णुवत् (S).

स्फुरत्पृथुललाटश्रीभृंगुकच्छवत् । उत्तमाङ्गस्थितिं बिभ्रत् कन्दर्पवत् । सदावालमनोहरो वृक्षवत् । बहुकुन्तलसद्द्युतिः सुभटवत् । अधिकेशश्रियं बिभ्रन्नन्दिवत् । कचरोचितः समुद्रवत् । काले वरस्थितिं बिभ्रत् कुमारीवत् । सुसम्पन्नवपूरम्यो नृपवत् । साक्षादधिक-

स्फुरन्ती पृथुर्महती ललाटश्रीर्यस्येति पक्षे पृथुललाटश्रीः पृथुला लाटश्रीः देशश्रीः भृगुं कच्छतीति तीर्थविशेषस्तत्तु लाटदेशे वर्त्तते ।

उत्तमा चासौ अङ्गस्थितिश्चेति तथा तां पक्षे उत् अतिशयेन उद्गता उत्तमा अङ्गस्थितिः शरीरस्थितिः तां बिभ्रत् ।

सदा सर्व्वदा वालाः केशा स्तैर्मनोहरः पक्षे आवालं आलवालं "स्यादालवालमावालमापापेत्यमरः" ।

बहुः कुन्तलः केशः तेन सन्ती द्युतिर्यस्य पक्षे बहुकुन्तेन प्रासनामास्त्रेण लसन्ती द्युतिरस्येति ।

अधि अधिका केशश्रियं केशशोभां बिभ्रत् पक्षे अधिका चासौ ईशश्रीश्च तां बिभ्रत् ।

कचाः केशाः तैरोचितः पक्षे कचरा जलजन्तवस्तेषामुचितः समवेतः ।

कलेवरं शरीरं कलेऽव्यक्तमधुरध्वनौ वरां स्थितिं मनोहरतां कालेवरेति च पाठे काले यथासमयं वरस्य पत्युः स्थितिं पक्षे कलेवरस्येदं कालेवरम् ।

सुसम्पन्नं यद् वपुः शरीरं तेन रम्यः "रोरितिरेफलोपे दीर्घः" पक्षे सुसम्पत् भवा पूः [तस्यां] पुरि पुर्य्यां रम्यः ।

विग्रहो दैत्यवत्। उच्चैरङ्गमनोहरो नटवत्। अधिकाय-स्थितिं बिभ्रत् कृपाणवत्। विष्णुरिवाहीनभोग-सङ्गतशरीरो विपक्षासनः सुदर्शनान्वितः। शिव इव परमहसितश्रीः सुशोभनगरस्थितिः। महासेनानुयातो

साक्षात् प्रत्यक्षं अधिको विग्रहो यस्येति "गात्रं वपुः संहननं शरीरं वर्ष्मविग्रह इत्यमरः" पक्षे साक्षात् स्वयमेव कविं शुक्रं "शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविरित्यमरः," कविम् अधीति अधिकवि यस्तो ग्रहणं यस्येति ।

उच्चैः अतिशयानि अङ्गानि मनोहरः पक्षे उच्चैः रङ्गः नृत्यभूमिस्तत्र मनोहरः ।

अधि अधिकं कायस्य स्थितिं शोभां पक्षेऽधिकमयसो लौहस्य स्थितिं "खर्परे शरि वा विसर्गलोपो वक्तव्य इति" विसर्गस्य लोपः ।

अहीनो महान् भोगः सुखं पक्षे अहीनो वासुकिस्तस्य भोगः शरीरं, विपदं क्षासयतीति पक्षे विः पक्षी गरुडस्तस्य पक्षं पक्ष-स्तत्रासनं यस्य सः, शोभनं दर्शनं चक्षुस्तत्र तेन अन्वितः ।

परमा हसितश्रीर्यस्य स तथा परः श्रेष्ठो मह उत्सवो यस्य सः, सिता शुक्ला श्रीर्यस्य ततः कर्मधारयः पक्षे परं केवलम् अहसिता अनुपहसिता श्रीर्यस्य। परमहितश्रीरिति पाठे परं अहितः सर्पस्य श्रीर्यस्य, सुशोभनं नगरं तत्र स्थितिः वसतिर्यस्य पक्षे सुशोभना गरस्थितिः विषस्थितिर्यस्य सः ।

विष्वक् सर्वतः सेनया उपासितो विग्रहो यस्येति पक्षे विष्वक्सेनेन हरिणा उपासितदेहः ।

विष्वक्सेनोल्लासितविग्रहः। समुद्र इव समानघन-रसभासितो बहुलवारणो नदीनदेशः सुधामाश्रयः। सत्यलोक इव हिरण्यगर्भरुचिः। सोमेश्वर इव प्रभासङ्गतः। रविरिव महोदयान्वितः। अनुरुद्ध इव

समाना अनघा या नरसभा तत्र आसितः पक्षे समानः सद्घनरसस्तेन भासितः, बहुलो वारणो हस्ती यस्येति पक्षे बहुलानां वारां रणः शब्दो यत्र, नदीनदेशोऽदरिद्रदेशः पक्षे नदीनां नदानाञ्च ईशः, सुधामाश्रयः शोभनानां धाम्नां आश्रयः स्थानं, पक्षे सुधा अमृतं मा लक्ष्मीस्तयोराश्रयः।

हिरण्यस्य सुवर्णस्य गर्भोऽभ्यन्तरं यस्य पक्षे हिरण्यगर्भो ब्रह्मा च तत्र रुचिः प्रीतिरस्य।

प्रभया कान्त्या सङ्गतः पक्षे प्रभासं तीर्थं गतः प्राप्तः, सोमेश्वरो रुद्रमूर्त्तिभेदः [अधुना इतिहासादौ सोमनाथ इति ख्यातः]

महस्तेजस्य दया च ताभ्यां समन्वितः पक्षे महान् उदयस्ते-नान्वितश्च।

विशेषदोषैः सह वर्त्तमानाः सदोषाः पापिनस्तेषु अरुचिः पक्षे सदा निरन्तरं ऊषा वाणासुरदुहिता तस्यां रुचिर्यस्येति।

अपगतं परिजातं यस्य सः, पक्षे नास्ति पारिजातं यस्मिन् पारिजातशून्य इत्यर्थः।

सुशोभना रुचिः कान्तिर्यासां ताः सुरुचयस्ताश्च ता रमण्यश्च ताभिः रमणीयः पक्षे सुतरां रुचिरा मणयः ताभिः रमणीयः।

सदोषारुचिः। उद्धृतसारसागर इवापारिजातः। रोहण इव सुरुचिरमणीरमणीयः। इन्द्र इव बलक्षमोदितश्रीः[१]। प्रावृषेण्यहंससंघ इव सन्मानसङ्गतः। श्रोत्रियइव सदाचारप्रियः। देवइवातिसम्पन्नवसुधाभोगी। प्रावृट्काल इव सुखद्योतः[२]। तूनीरइव

बलेन चतुरङ्गेण चमया प्रृथ्व्या उदितश्रीः, पक्षे बलक्षा धवला या सा शोभा तया उदितश्रीः।

सन्मानश्चित्तसमुन्नतिस्तेन सङ्गतः पक्षे सत्मानसं सरोवरं गतः प्राप्तश्च।

सदा सर्व्वदा चाराः गूढ़सेवकाः ते प्रियाः यस्येति पक्षे सदाचारः सत्कर्म्म प्रियं यस्य सः।

अतिसम्पन्ना या वसुधा तस्या भोगो यस्यास्तीति भोगी पक्षे अति अत्यन्तं सम्पत् यस्यास्तीति तया नवसुधा नूतनामृतं तद्भोगी।

सुखेन द्योतः प्रकाशो यस्य पक्षे शोभनः खद्योतो ज्योतिरिङ्गणो यत्रेति च "खद्योतोज्योतिरिङ्गण इत्यमरः"।

दारैः सह वर्त्तमानः सदारः सचासौ उपचितश्च वृद्धिं प्राप्तः पक्षे सदा नित्यं रोपाः वाणाः तैश्चितः व्याप्तः "कलम्बमार्गणशराः पत्रीरोपइषुर्द्वयोरित्यमरः"।

खेन शोभनेन स्वाभा तेजसा उदिता श्रीरस्य पक्षे सुखे ररोगिभिः आमोदिता आनन्दिता श्रीरस्येति।

---

१ चन्द्र इव बलक्षमोदितश्रीः (S).

२ प्रावृट्कालइवसुखोद्यतः (S).

सदारोपचितः। वैद्यइव स्वस्थामोदितश्रीः। वणिगिव उपायनसल्लक्ष्मीः। सुराष्ट्रइवाधिकं गौरचितस्थितिः[१]। भृङ्गइव प्रियङ्गौरचिताटोपं बिभ्रत्। तरुणीगणइव पुरोगौरसाटोपश्रीः। कामिनीकेशपाशइव सदाम-

उपायनं अन्यप्रेषितं वस्तु, तत्र सन्त्यो लक्ष्म्यो ता यस्येति पक्षे उपायः प्राप्तिस्तेन नवाः नूतनाः सन्त्यो लक्ष्म्यो ता यस्येति।

अधि अधिकं गौरी चिता व्याप्ता स्थितिः शोभा अस्येति पक्षे अधि अधिकं कङ्गौ धान्यविशेषे रचिता स्थितिरस्य "स्त्रियौकङ्गुप्रियङ्गू द्वे इत्यमरः" सुराष्ट्रो देशविशेषः।

प्रिय स्पृहणीयं गौरं चितमाटोपं बिभ्रत् पक्षे प्रियङ्गौ फलिनीपुष्पे रचितम् आटोपं बिभ्रत्।

पुरोगाः पुरवर्त्तिनः औरसाः पुत्राः उरसा निर्म्मिता इति विग्रहे "उरसोऽण् च इत्यण्" तेषाम् आटोपस्तेन श्रीः शोभा यस्येति पक्षे पुरोगेन अग्रगतेन औरसयोः स्तनयोः उरस आगतौ उरसि जातौ वा तयोः आटोपस्तेन श्रीर्यस्येति।

सदा नित्यं अमराः देवास्तैः समा तुल्या धूरस्येति तथा "ऋक्पूरब्धूःपथामानक्षे इत्यकारः" पक्षे दाम्नां मालानां रसः दामरसः तेन सह वर्त्तमानः सदामरसस्तेन मधुरः।

सुष्ठु यद् राज्यं तस्य घटना तत्र दक्षः पक्षे सुराणां देवानां आज्यघटना [यज्ञः] तत्र दक्षः।

---

१ सुराष्ट्रदेशइव अधिकं गौरचितस्थितिः (ग).

रसमधुरः। दीक्षितइव सुराज्यघटनादक्षः। दशरथ-
इवाभिरामोल्लसितकान्तिः॥ नृपः॥ सैन्यमिव फलकस-
ल्लक्ष्मीकं सज्जं वीरगणं बिभ्राणम्। विष्णुवक्षःस्थलमिव
पुन्नागकृतमालालङ्कृतम्। रुद्रभालस्थलमिव स्फुरिता
मलकीलाक्षानलम्। कामशरीरमिव सर्व्वदा रूप-
शोभितम्। चन्द्रमिव विशाखानुगतम्। समुद्रमिव

अभिरामैः मनोहरवस्तुभिः उल्लासितकान्तिः पक्षे अभि
सम्मुखम् रामेण उल्लासितकान्तिः। इति नृपवर्णनम्।

फलैः प्रसारैः समन्ती लक्ष्मीरस्येति फलकैर्युद्धसाधनचर्म्मभिः
सती लक्ष्मीरस्येति च सज्ज कृतसन्नाहादिकं वीरगणं पक्षे सत्
प्रशस्तं जम्बीरगणम्।

पुन्नागेन अनन्तेन नागेन कृता या माला तया अलङ्कृतम्
अनन्तमूर्त्त्या हरिणा नागोपवीत कृतमित्यागमप्रसिद्धं पक्षे पुन्नागो
नागकेशरः कृतमालः करञ्जकस्ताभ्यामलङ्कृतम्।

स्फुरन्तः आमलकी धात्री, साचा तरुभेदो, मलस्तृणभेदश्च
यत्र पक्षे अमला कीला ज्वाला यत्र एवंभूतोऽक्षामलो नेत्राग्निर्यत्र,
अथवा अमला कीला यत्र तदमलकीलमचिस्फुरितममलकीलाक्षि
यस्मादेवम्भूतोऽनलो यत्र।

सर्वदा रूपेण सौन्दर्य्येण शोभितम् अथवा सर्वदा अरूप-
शोभितम् पक्षे सर्वैर्दारुभिः काष्ठैरुपशोभितम्।

विशिष्टा याः शाखाः ताभिः अनुगतम् पक्षे विशाखा नक्षत्रम्
तेन अनुगतम्।

विद्रुमभूषितम् । रामसैन्यमिव सज्जपावनवैभवम्[1] । रविमिव तापिच्छविराजितम् । नेपालमिव विराजिताम्रश्रियम् । क्षेत्रमिव बहुधान्यपुष्टश्रियान्वितम् ॥ वनम् ॥ हिमवन्तमिव सदागजातिमनोहरं शृङ्गाटोपचितं बहुशोभवनान्वितम् ॥ नगरम् ॥ नारीव शृङ्गारोपचित

विशिष्टद्रुमा अरण्यभूस्तया ऊषितम् पक्षे विद्रुमाणि प्रवालानि तैः भूषितम् ।

सत् च तत् जपावनं च तस्य वैभवं यस्मिन् पक्षे सज्जः यः पवनस्तस्यापत्यं पावनः हनूमान् तस्य वैभवं यस्मिन् ।

तापिच्छास्तमालाः, "कालस्कन्धस्तमालः स्यात् तापिच्छोऽप्यथ सिन्दुकः इत्यमरः" तापिच्छस्तापिच्छेति द्वैरूप्यं तैर्विराजितं पक्षे तापम् विधत्ते या सा तापिनी सा छविः कान्तिस्तया राजितम् ।

विराजिता आम्राणां श्रीर्यत्र पक्षे विराजिनी ताम्रश्रीर्यत्रेति च ।

बहुधा अन्यपुष्टानां पिकानां या श्रीस्तया अन्वितं पक्षे बहुधान्यानां पुष्टा या श्रीस्तया अन्वितम् । इतिवनम् ।

सदा सर्वदा गजैरतिमनोहरं पुनः शृङ्गाटैश्चतुष्पथैरुपचितम् बहुभः भवनैरन्वितम् "शृङ्गाटकचतुष्पथ इत्यमरः" भवनागारमन्दिरमितिचामरः" पक्षे अगाः पर्वताः वृक्षाश्च तेषां जातिस्तया मनोहरं अगः "स्यादगवत् पृथ्वीधरपादपयोः पुमानिति मेदिनी" "शैल-

---

[1] रामसैन्यमिव सजनसज्जपावनवैभवम् (S) .

**स्थितिः[१]। सर्पइव सद्विषाणां श्रियं बिभ्रत्। लोकइव सदाच्छपुच्छविराजी॥ वृषभः॥ नृपइव विपक्षोपचित-विभवः। रणइव स्फुरद्विपक्षतिः[२]। तडागइव शतपत्र-विराजितः॥ पक्षी॥ पद्मइव सदामोदरसोदरः। शरत्-**

वृन्तौ गवां विषाणं" इत्यमरोऽपि" शृङ्गाणामाटोपस्तेन चितं बहुशोभानि वनानि तैरन्वितम्। इतिनगरम्।

शृङ्गाभ्यां विषाणाभ्याम् आरोपः तेन चिता परिचिता जाते त्यर्थः स्थितिर्यस्येति पक्षे रणरसेन उपचितस्थितिः।

सन्ति विषाणानि यस्यां सा तां श्रियं बिभ्रत् पक्षे सन्ति यानि विषाणि तेषां श्रियं बिभ्रत्।

सदा अत्र जगति पुच्छं तेन विराजतेऽसौ विराजी पक्षे अपुः सौमं तच्छविः तत् कान्तिस्तया राजतेऽसौ राजी। इति वृषभः।

विशिष्टा ये पक्षा स्तैरुपचितो विभवो यस्य पक्षे विपक्षेषु वैरिषु उपचितो वृद्धिं गतो विभवो यस्येति।

विपक्षं विशिष्टं पतत्रं, विपक्षः शत्रुश्च। स्फुरन्तौ द्वे पक्षतौ पक्षमूले यस्य पक्षे स्फुरन्तौ प्रादुर्भवन्तौ द्विपानां हस्तिनां क्षतिः क्षयो यत्र।

शतमनेकानि पत्राणि पत्रास्तैर्विराजितः "गरुत्पक्षच्छदाः पत्रमित्यमरः" पक्षे शतपत्राणि कमलानि यत्र। इति पक्षी।

---

१ नारीवशृङ्गारोपस्थितिः (S).

२ रणा इव स्फुरद्विपक्षस्थितिः (S).

कालइव उच्चकैरवभूषितः[१] । गिरिरिव कन्दरोचित-शोभः ॥ मेघः ॥ प्रावृट्कालइव सदारसमुपाश्रितः । रावणइव स्वकलङ्काभोगः[२] । रविरिव सुधामोदितश्रीः ॥ चन्द्रः ॥ स्थाणुरिवापचपः । गज इव परमहेलाविलासी । स्वर्ग इव सुरतः श्रियं बिभ्राणः ॥ कामुकः ॥ कुह्रूचन्द्र

स इति भिन्नं पदं दामोदरस्य हृषीकेशस्य सोदरः समान-कान्तिः पक्षे सदा नित्यं आमोदः गन्धः रसः मरन्दः तौ उदरे यस्येति "वा पुंसि पद्ममित्यमरः" ।

उच्चकैर्महान् रवः तेन भूषितः पक्षे उच्चानि यानि कैरवाणि तैर्भूषितः ।

कन्दरेषु रोचिता शोभा यस्येति पक्षे कन्दराभिः दरीभिः उचिता शोभा यस्येति । इति मेघः ।

सदारैः सस्त्रीकैः समुपाश्रितः पक्षे सदा नित्यं रसं जलम् उपाश्रितः ।

स्वकेन स्वकीयेन कलङ्केन आभोगः परिपूर्णता यस्य पक्षे स्वकायां लङ्कायां भोगो यस्येति ।

सुधया अमृतेन मोदिता श्रीर्यस्य, सुधया सा शोभा तया उदिता श्रीरिति वा पक्षे सुधाम्ना तेजसा उदिता श्रीर्यस्य । इति चन्द्रः ।

---

१ शरत्काल इव उच्चकैरवभासितः (S).

२ रावण इव सकलङ्काशोभः (S).

इव सूर्य्यसङ्गतः। भृङ्गइवाधिकमलोल्लासी॥ दुर्ज्जनः॥ तारागणइव तिमिरोचितः। वियोगीव विस्तारितापः॥ समुद्रः॥ रसवतीव समांसमीना॥ गौः॥ हरिरिव पद्माकरसुखितः। स्वर्ग इव सदानवारिः॥ गजः॥

अपगता त्रपा यस्य सः पचे न पचं पातीत्यपचप इति नञ् समासः।

परेषां महेला स्त्री तस्या विलासीति "महिलायां महेलापि मेहिला स्यान्महेलिकेति द्विरूपम्" पचे परमा या हेला लीला तया विलासी।

सुरतो देवात् श्रियं सम्पदं बिभ्राणः पचे सुरतः आद्यादित्वात् तसिः [आद्यादिभ्य उपसंख्यानम्] इत्यस्मात् श्रियं शोभां [बिभ्राणः] इति कामुकः।

सूरिभिः पण्डितैः न सङ्गतः असङ्गतः पचे कुल्लः अमा "मा नष्टेन्दुकलाकुल्लरित्यमरः" तत्सङ्गः सूर्य्येण सङ्गतः युक्तः।

अधिकमलं अधिकपापं तत्र उल्लासो तस्यास्तीति पचे कमले इत्यधिकमलं तत्रोल्लासी। इति दुर्ज्जनः।

तिमिर्मत्स्यः "रोहितो मद्गुरः शालो राजीवः शकुलस्तिमि-रित्यमरः" तेन रोचितः पचे तिमिरे अन्धकारे उचिता विस्तारिता आपो येन स तथा।

विस्तारिता आपो येन स तथा "ऋक्पूरब्धूरित्यप्रत्ययः" पचे विस्तारी तापो यस्येति। इति समुद्रः।

गणेश इव परमोदकरुचिः॥ वराहः॥ जैननय इव बहुलक्षपणः॥ वणिक्॥ नारद इव कलहावस्थितिः॥ कामिनीजनः॥ शुक्र इव सदनुमानः॥ तार्किकः॥ निर्व्यापार इव पृथुलक्षणः॥ वाजी॥ कविरिव

समां समां विजायते इति समांसमीना प्रत्यब्दप्रसूता गौः "समांसमीना सा चैव प्रतिवर्षं प्रसूयते इत्यमरः" समां समां विजायते इति स्वः पक्षे मांसानि मत्स्याश्च तैः सह वर्त्तमाना रसवती पाकस्थानं, "रसवत्यान्तु पाकस्थानमहानसे इत्यमरः"। इति गौः।

पद्मायुक्तकरः शुण्डादण्डः तेन सुखितः पद्मैः बिन्दुजालकैः "पद्मं स्याद्बिन्दुजालकमिति हलायुधः" आसमन्तात् युक्तश्चासौ करश्च तेन पक्षे पद्मायाः करः पाणिस्तेन सुखितः हरिः सूर्य्यः तथा पद्माकरः पद्मस्य काननं तत्र सुखित इति वा।

दानवारिणा दानोदकेन सह वर्त्तमानः पक्षे दानवाः दैत्या स्तेषाम् "अरिरिन्द्रः तेन सह वर्त्तमानः। इति गजः।

परमा श्रेष्ठा उदके रुचिर्यस्य पक्षे परमा मोदके लड्डुके रुचिर्यस्य सः। इति वराहः।

बहुभिर्लक्षैः पणो व्यवहारो यस्य पक्षे बहुलं क्षपणं क्षपणस्य बौद्धाचार्यभेदस्य मतं यत्र, जिननयो बौद्धशास्त्रम्। इति वणिक्।

कलाः ये हावाः स्त्रीणां शृङ्गारभावजाः क्रियाः "हेला लीलेत्यमीहावाः क्रियाः शृङ्गारभावजा इत्यमरः" तत्र

बहुलोहम् ॥ कपाटम् ॥ निशीथ इव प्रबलतमा-वाहिनी । भूमण्डल इव गिरिशतश्रियं बिभ्राणः ॥ रावणः ॥ विष्णुरिव सदारमानवप्रीतिकृत् ॥ प्रावृट्कालः॥ महाकवि श्लोक इव सरसोपचितपादः ॥ गिरिः ॥

स्थितिर्यस्य पक्षे कलहे परस्परविरोधे स्थितिर्यस्य सः । इति कामिनीजनः ।

सत् अनुमानं प्रमाणं यस्य पक्षे दनुर्दैत्यमाता तस्याः मानसत्त्वहितः । इति तार्किकः ।

निर्व्यापारो निश्चेष्टोऽलस इति यावत् बहुलः क्षणः [ उत्सवः ] यस्य सः "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः इत्यमरः" पक्षे बहूनि लक्षणानि आवर्त्तकादीनि शुभचिह्नानि यस्य सः । इति वाजी ।

बहु लोहं यस्य सः पक्षे बहुल ऊहो यस्य सः । इति कपाटम् ।

प्रबलतमा अतिप्रबला पक्षे प्रबलं तमोऽन्धकारो यस्येति "अन्येषामपीति" दीर्घः ।

गिरिशात् महादेवात् इति गिरिशतः श्रियं बिभ्राणः "गिरिशो गिरीशो मृड इत्यमरः" पक्षे गिरीणां पर्वतानां शतानि तेषां श्रीस्तां बिभ्राणः । इति रावणः ।

दारैः सह वर्त्तमानाः सदाराः ये मानवाः मर्त्यास्तेषां प्रीति-कृत् पक्षे सदा सर्वदा रमायाः लक्ष्म्याः नवप्रीतिकृत् । इति प्रावृट्कालः ।

वर्षोपल इव सत्वरश्रयान्वितः॥ परिव्राट्॥ इति खण्डश्लेषाः॥

अथ शब्दैरपूर्व्वाद्यैः पूर्व्वभागप्रयोजितैः।
श्लेषाय शब्दमध्येषु निक्षिपेदक्षरं यथा॥ १॥

अपूर्व्वस्वरचेष्टः[1]। आचितखेटकशोभी। उद्योतिपरागशोभः[2]। अञ्चितगजयुतः। खचितद्योतयुतः।

रमायां पृथ्व्यां उपचितः वृद्धिं गतः यः पादः प्रत्यन्तपर्व्वतस्तेन सहितः पक्षे रसः शृङ्गारादिः पादश्चरणः श्लोकानाम्। इति गिरिः।

सत्वरं शीघ्रं यः क्षयस्तेन अन्वितः पक्षे सत्वस्य सत्त्वगुणस्य रक्षया अन्वितः। इति परिव्राट्। पादानां भङ्गेन ये श्लेषास्ते खण्डश्लेषाः।

(१) श्लेषान्तरमाह अपूर्व्वेत्यादि अपूर्व्वाद्यैरपूर्व्वशब्दादिभिरादिशब्दादाचितद्योतिताञ्चितखचितादीनां ग्रहणम्। अकारः पूर्व्वो यस्य सः।

अपूर्व्वा स्वरसा चेष्टा यस्येति पक्षे अस्वरसा असुन्दरा चेष्टा यस्येति। आ समन्तात् चितो यः खेटकः खेट एव खेटकं चर्म्म "खेटः कफे ग्रामभेदे चर्म्मण्य स्ववति त्रिषु इति मेदिनी" तस्य शोभा यस्यास्तीति पक्षे आखेटकं मृगया तच्छोभा यस्यास्तीति।

---

[1] अपूर्व्वसुरचेष्टः (A).
[2] उद्योतिपरागमुक्तः (S).

BIBLIOTHECA INDICA:
A
COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1462.

# सटीक-कविकल्पलता ।

# KAVI-KALPA-LATĀ

A WORK ON RHETORIC BY DEVEŚVARA
TOGETHER WITH HIS OWN COMMENTARY.




EDITED BY
PANDIT ŚARAT CANDRA ŚĀSTRI.

FASC. II.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL, 1, PARK STREET.
1923

# NOTICE.

## BIBLIOTHECA INDICA

### PUBLISHED BY

### THE ASIATIC SOCIETY OF BENGAL.

THE Bibliotheca Indica is a collection of works belonging to or treating of Oriental literatures and contains original text-editions, as well as translations into English and also bibliographies and studies

The publication was started in 1849, and consists of an Old and a New Series The New Series was begun in 1860 and is still running.

As a rule the issues in the series consist of fascicles of 96 or 100 pages print, though occasionally numbers are issued of double, triple or larger bulk, and in a few cases even entire works have been published under a single issue number Several different works are always simultaneously in progress. Each issue bears a consecutive issue number. The Old Series consists of 265 issues; in the New Series, till November, 1923 inclusive, 1459 issues have been published These 1724 issues represent 237 different works; these works again represent the following literatures —

Sanskrit, Prakrit.
Rājasthani, Kashmiri, Hindi.
Tibetan.
Arabic, Persian

Several works published are partly or wholly sold out, others are still incomplete and in progress. A few works though incomplete, have been discontinued

Various price lists and notices concerning the Bibliotheca Indica are available and may be had on application Other lists are in preparation. Revised lists are published from time to time.

The standard sizes of the Bibliotheca Indica are three —

Demy (or small) octavo.
Royal (or large) octavo
Quarto.

The prices of the Bibliotheca Indica as revised in 1923 are based (with some exceptions) on the following scale per unit of 96 or 100 pages in a fascicle as the case may be .—

घनवह्निस्मरः। छविराजितगल्लः। दामोदितनवश्रीः। धरोचितवल्लः। न व्यामक्षचनाथः[1]। परोचितवन-शोभो। प्रमोदितकटस्थिति[:]। बलोचितहलश्रीः[2]। वामोदितमनस्थितिः[3]। विक्रान्तभवोपेतः। विभूषित-पदान्वितः। [4]वियुक्तजनप्रियः। [5]व्यामपक्षहारी। भरोचितरतश्रीः। रचितमणीभासुरः। सततरम-स्थितिः। स्थामोदितवरश्रीः। क्षमोदितपर्णस्थितिः। संसक्तगरस्थितिः[7]। संप्राप्तसारभूषणः। संभूषितशय-युतः। संभावितमदोदयः।

परागः कौसुमरेणुः। पर्ते उपरागः। श्रृङ्गं। खद्योतः। घस्मरः। कुगल्लः। दानवः। धवलः। नक्षत्रनाथः। पवनः। प्रकटः। बहलः। वामनः। विभवः। विपदः। विजनः। विपक्षः। भरतः। रमणी। सरसः। स्थावरः। क्षपण। सङ्गरः। संसारः। समायः। सम्मदः इत्यादयोऽप्यपरेऽप्यूहनीयाः शतशः।

१ 'न ग्रामक्षचनाथः' B. २ 'बलोचितफलश्री' B. D.
३ 'तवनास्थितिः' D.
४ 'वियुक्तधनप्रियः' B., 'विमुक्तजनप्रियः' D.
५ 'विपक्षहारी' B. ६ 'भारोचितरतश्री' B. D.
७ D. पुस्तके नास्ति.

कलोपयुक्तकपोतः[1] । प्रस्खलितप्रवालोपेतः । प्रभ्रष्टप्रमदोदयः[2] । विमुक्तविरहस्थितिः । [3]मालोपयुक्तमानवघनः । [4]मारहितमाधवोल्लसि[त]ः । नरहितनगरालङ्कारः । सुरहितसुधर्माश्रयः ।

[5]रचितश्लेषसंश्लेषैर्वर्ण्य( र्णा ! )वर्ण्यादिनामभिः ।
उपमानकृतोल्लासैः साधयेत्सर्ववर्णनम् ॥ १ ॥

इदानीं पूर्व्वाचरदूरीकरणेन श्लेषान्तरमाह । कलोपयुक्तेति । ककारस्य लोपेन युक्तो यः 'कपोत' इति पदं तेन 'पोत' इति पदमायातं भवति । एवं बालः । मदः । रहः । नवघनः । धवः । गरः । धर्माश्रयः ।

(१) रचितश्लेषेण संश्लेषो योगो येषां तैः तथा । वर्णा गौरादयो गुणाः । वर्ण्या वर्णनीयाः पदार्थाः । वर्णिनो वा बलाकाकपोतरामभादयः शुक्लधूमरादिवर्णाश्रयाः । आदिशब्दात् स्वर्गव्योमादयः । एतेषां नामभिः संज्ञाशब्दैः गौरसितपीतकपोतबलाकादिशब्दैरित्यर्थः ॥

१ 'कपोतवान्' B., 'कपोलः' C., 'कलापयुतकपोतवान्' D.
२ 'अभ्रष्टाप्रमादयः' B., 'प्रभ्रष्ट' C.
३ 'मालोपयुक्तस्थितिः । मनिवघनः' D.
४ 'मारहितमाधवोल्लासितः' B. D.
५ 'जनित' B., 'जनितश्लेषसंश्लेषैर्वर्णावर्ण्यादिनामकैः ।' D.

**अहो गौरवसल्लक्ष्मीर्यामिनीकामिनीपतिः ।**
**¹सुपर्वपर्वतौपम्यभङ्गीमङ्गीकरोत्यसौ ॥ २ ॥**

**गौरीभूतकलाशाली परशुभ्रामितोदयः ।**
**सुपीवरसितोल्लासः स्पष्टांश्वेतश्रियं वहन् ॥ ३ ॥**

(२) गौरी वसन्ती लक्ष्मीर्यस्येति । पक्षे गौरवेण गुरुतया सती लक्ष्मीरस्येति । 'गौरः पीतसितयोः ।' यामिन्येव कामिनी तस्याः पतिश्चन्द्रः । सुपर्व्वपर्व्वतो मेरुस्तस्योपमाभङ्गी सादृश्यरीतिः ॥

(३) गौरीभूता शुक्लीभूता या कला तया शाली श्रेष्ठः । पक्षे गौरी दुर्गा, भूतः प्रेतः, कला चन्द्रकला, एतैः शाली श्रेष्ठः । इह शिवचन्द्रयोरध्याहारेणोपमेयभेदः । एवं सर्व्वत्र यथायथमध्याहार्य्यम् । परः शुभ्रः आमितः स्थितः उदयो यस्य । पक्षे परशुना कुठारेण भ्रामितः शोभितः उदयो यस्येति । शोभनः पीवरो महान् सितः शुक्लः उल्लासो दीप्तिरस्येति । पक्षे सुपीवरा महता रमितेन शब्देन उल्लासो यस्य । 'पीवा तु पीव-पीवरौ ।' स्पष्टांशुना किरणेन *इता प्राप्ता या श्रीस्तां वहन् । पक्षे स्पष्टम् ॥

१ 'सुपर्ण' A. B.

* 'इता' इत्यत्र 'एता' इति चेत्समीचीनम् । मूलानुसारित्वात्

कलोपयुक्तकपोतः[१] । प्रस्खलितप्रवालोपेतः । प्रभ्रष्टप्रमदोदयः[२] । विमुक्तविरहस्थितिः । [३]मालोपयुक्तमानवघनः । [४]मारहितमाधवोल्लसि[त]ः । नरहितनगरालङ्कारः । सुरहितसुधर्माश्रयः ।

[५]रचितश्लेषसंश्लेषैर्वर्ण्य( र्णो ! )वर्ण्यादिनामभिः ।
उपमानकृतोल्लासैः साधयेत्सर्ववर्णनम् ॥ १ ॥

इदानीं पूर्व्वोक्तरदूरीकरणेन श्लेषान्तरमाह । कलोपयुक्तेति । ककारस्य लोपेन युक्तो यः 'कपोत' इति पदं तेन 'पोत' इति पदमायातं भवति । एवं बालः । मदः । रहः । नवघनः । धवः । गरः । धर्म्माश्रयः ।

(१) रचितश्लेषेण संश्लेषो योगो येषां तैः तथा । वर्णा गौरादयो गुणाः । वर्ण्या वर्णनीयाः पदार्थाः । वर्णिनो वा बलाकाकपोतरासभादयः शुक्लधूमरादिवर्णाश्रयाः । आदिशब्दात् स्वर्गव्योमादयः । एतेषां नामभिः संज्ञाशब्दैः गौरसितपीतकपोतबलाकादिशब्दैरित्यर्थः ॥

१ 'कपोतवान्' B., 'कपोलः' C., 'कलापयुक्तकपोतवान्' D.
२ 'अभ्रष्टाप्रमादयः' B., 'प्रभ्रष्ट' C.
३ 'मालोपयुक्तस्थितिः ; मानिवघनः' D.
४ 'मारहितमाधवोल्लासितः' B D.
५ 'जनित' B., 'जनितश्लेषसंश्लेषैर्वर्णवर्ण्यादिनामकैः ।' D.

अहो गौरवसल्लक्ष्मीर्यामिनीकामिनीपतिः।
'सुपर्वपर्वतौपम्यभङ्गीमङ्गीकरोत्यसौ ॥ २ ॥

गौरीभूतकलाशाली परशुभ्रामितोदयः।
सुपीवरसितोल्लासः स्पष्टां श्वेतश्रियं वहन् ॥ ३ ॥

(२) गौरी वसन्ती लक्ष्मीर्यस्येति। पक्षे गौरवेण गुरुतया सती लक्ष्मीरस्येति। 'गौरः पीतसितयोः।' यामिन्येव कामिनी तस्याः पतिश्चन्द्रः। सुपर्व्वपर्व्वतो मेरुस्तस्योपमाभङ्गी सादृश्यरीतिः॥

(३) गौरीभूता शुक्लीभूता या कला तया शाली श्रेष्ठः। पक्षे गौरी दुर्गा, भूतः प्रेतः, कला चन्द्रकला, एतैः शाली श्रेष्ठः। इह शिवचन्द्रयोरध्याहारेणोपमेयभेदः। एवं सर्व्वत्र यथायथ मध्याहार्य्यम्। परः शुभ्रः भ्रामितः स्थितः उदयो यस्य। पक्षे परशुना कुठारेण भ्रामितः शोभितः उदयो यस्येति। शोभनः पीवरो महान् सितः शुक्लः उल्लासो दीप्तिरस्येति। पक्षे सुपीवा महता रसितेन शब्देन उल्लासो यस्य। 'पीवा तु पीवरपीवरौ।' स्पष्टांशुना किरणेन 'इता प्राप्ता या श्रीस्तां वहन्। पक्षे स्पष्टम्॥

१ 'सुपर्व्व' A. B.
इता' इत्यत्र 'एता' इति चेत्समीचीनम्। सूत्रानुसारित्वात्

सदाबलाकासितश्री[1]र्गिरीशाचलसच्छविः ।
स्फुरच्चन्द्रकसल्लक्ष्मीर्घनसारद्युतिं[2] वहन् ॥ ४ ॥

सदा नवसुधाशोभी बिभ्राणो राजतश्रियम् ।
जातरूपचयच्छायो [3]मधुपीतप्रभान्वितः ॥ ५ ॥

(४) बलाकेव बकपङ्क्तिरिव सिता श्रीरस्य । पक्षे अबलया स्त्रिया कासिता प्रकाशिता श्रीरस्येति । 'काश दीप्तौ' इत्यस्मात् धातोः क्तप्रत्यये रूपम् । गिरिशवत् अचला सच्छविर्यस्य । पक्षे गिरिशाचलः कैलासः । स्फुरन्ती चन्द्रवत् कमनीया लक्ष्मीरस्येति । पक्षे स्फुरच्चन्द्रकेण मयूरपक्षेण सती लक्ष्मीरस्येति । घनवत्सारः श्रेष्ठः, कर्पूरश्च ॥

(५) सदा नवसुधावत् शोभी । पक्षे सदानवासौ वसुधाशोभी चेति । राजतश्रीः रजतसम्बन्धिनी या श्रीस्ताम् । पक्षे राजतो नृपात् । पूर्ब्बवत्समाधानम् । जातमुद्भूतं यद्रूपं तच्चयेन च्छाया यस्य । पक्षे जातरूपं सुवर्णम् । मधुवत्पीतप्रभा । पक्षे मधुपी भ्रमरी तया इता प्राप्ता प्रभा ॥

---

१ 'सदाऽबलाकासितश्री' B. २ 'श्रियं' B.
३ 'मधुपीतभ्रमान्वितः' B.

कर्णिकाररचितच्छायः परागश्रीविराजितः।
[1]अधिकार(रु?)ण्यसंशोभी नवेन महसा [2]कृतः॥६॥

बहुलोहितसंपत्तिः प्रवालद्युतिपेशलः।
अधिकद्रुश्रियं[3] बिभ्रत्कडाररचितवैभवः॥ ७॥

(६) कर्णिकारं चम्पककुसुमं तद्वत् चिता प्राप्ता च्छाया येन। पक्षे कर्णिका कर्णभूषणं तेन रचितच्छायः। परागः कौसुमरेणुः तद्वत् श्रीः। पक्षे परा श्रेष्ठा अगस्य वृक्षस्य पर्व्वतस्य वा श्रीः। अधिकं आरुण्यं लौहित्यम्। पक्षे अधि अधिकं कारुण्यं करुणता कृपा च। नवो महेनः सूर्य्यः तन्महसा कृतः पुष्टः। पक्षे नवेन नूतनेन प्रशंस्येन वा महसा तेजसा कृतः॥

(७) बह्वी लोहिता सम्पत्तिः श्रीर्यस्येति। पक्षे बहुला ऊहिता सम्पत्तिरस्येति। प्रवालो विद्रुमः, प्रकृष्टबालश्च। अधि अधिका कद्रुः पिङ्गला श्रीः ताम्। पक्षे अधिकां द्रूणां वृक्षाणां श्रियम्। अधि अधिकां कद्रोर्दैत्यमातुर्वा* श्रियम्। कडारं पिङ्गं चितं व्याप्तं वैभवमस्येति। पक्षे कलया रचितं वैभवं येन। डलयोरैक्यस्मरणात्॥

१ 'अधिकारुण्यसंशोभी' B., 'अधिकारुण्यमं' D.
२ 'महसावृतः' B., 'महसा युतः' D.
३ 'कद्यामयं बिभ्रत्कलाः' (?) D.
* 'नागमातुर्वा' इति चेत्समीचीनम्। कद्रुश्च नागमातृत्वात्।

नवधूसरसाटोपः सदा [१]सवलसद्रुचिः ।
विभात्यधिकपोतश्री रासभासितवैभवः ॥ ८ ॥
असितत्त्वमनोहारी बहुश्यामलतान्वितः ।
[२]स्वभावनीलसल्लक्ष्मीः सदारामोदितद्युतिः ॥ ९ ॥

(८) नवेन प्रशंस्येन धूसरेण धूसरगुणेन साटोपः दृप्तः । पक्षे न वधूषु सरसः आटोपोऽस्येति । सदा सर्व्वदा शबलः सितासितमिश्रो गुणः तेन सती प्रशस्ता रुचिरस्येति । पक्षे सत् प्रशस्तं आसवं मधु, सदा सर्व्वदा सवो यज्ञो वा, तेन लसद्रुचिः । अधि अधिकं कपोतवत् श्रीर्यस्य । पक्षे पोतेन शावेन श्रीर्यस्य । रासभो गर्द्दभस्तद्वत् असितं ईषत् सितं वा वैभवं शोभा अस्येति । पक्षे रासेन नृत्यभेदेन भासितं वैभवमस्येति ।

(९) असितत्वं अशुक्लत्वम् । पक्षे असिः खड्गः तस्य तत्त्वं तद्विषयकं शिक्षासौष्ठवम् । श्यामलता कालिमा, लताभेदश्च । स्वभावेन नीला सल्लक्ष्मीरस्येति । पक्षे स्वभा स्वकीया शोभा तया अवन्यां पृथिव्यां उद्भवने वा सल्लक्ष्मीरस्येति । स्वभावेन नीनैर्नीडे कुलाये सल्लक्ष्मीरस्येति वा । उभयोरेकत्र स्मृतिः* । सदा सर्व्वदा रामवदुदिता द्युतिरस्येति । पक्षे सदा रामया [illegible]ण वा उदिता द्युतिः । सदारस्त्वासौ आमोदितद्युति-रिति वा ॥

---

१ ''सदास(श)बलसद्रुचिः' B., 'सरलसद्रुचिः' D.

२ 'प्रभाव' B., 'स्वभाव' D.

* 'एकत्वस्मृतिः' इति चेत्समीचीनम् ।

केशवामोदितच्छायो नदीनश्रीमनोहरः।
अन्धकारातिरोचिष्णुर्बिभ्रत्कुवलयस्थितिम्[1] ॥ १० ॥
[2]स्वर्जनस्थितिरोचिष्णुः स्वर्गलाभचित[ ]स्थितिः[3]।
[4]सदादिविहितोल्लासः सुरावासनयान्वितः ॥ ११ ॥

स्वर्गः।

(१०) केशवत् वामा शोभना उदिता छाया अस्येति। पक्षे केशवा नाम उदिता छाया अस्येति। नदीनः समुद्रः तद्वत् श्रीमनोहरः। पक्षे न दीनश्रिया दरिद्रवत् शोभया अन्वितः। अन्धकारवत् अतिरोचिष्णुः शोभनः। पक्षे अन्धकारातिः शिवः। कुवलयं नीलोत्पलम्, पृथ्वीवलयं च। कुत्सितं वलयं कङ्कणं वा ॥

(११) 'वर्णवर्ण्यादिनामभिः' इत्यत्र आदिशब्दग्टहीतस्योदाहरणम्। स्वर्जनो देवजनः, शोभनमर्जनं च। स्वर्गरूपो यो लाभस्तत्करा स्थितिरस्येति। पक्षे शोभनं अर्गलं दण्डः तस्य लाभः सदृशः करो बाहुः तेन स्थितिरस्येति। सदा दिवि स्वर्गे हितो धृत उल्लासो येन स तथा। पक्षे सतां आदौ विहितः उल्लासो येन। सल्लोकादीनां वा। सुराणां आवासे स्वर्गे नयान्वितः। सुराया मद्यस्य वासनया अन्वितः ॥

---

१ 'स्थितं' A. २ 'अर्ज्जुन' D.
३ 'स्वर्ग्गलोभक[र]स्थितिः' (?) B., 'स्वर्गलाभकरस्थितिः' D.
४ 'सदारविहितोल्लासः' D.

सव्योमासङ्गविद्योती सन्नभोगमनस्थितिः ।
[1]अभ्रान्तद्युतिरोचिष्णुःसदाकाशचितस्थितिः[2] ॥ १२ ॥

व्योम[3] ।

स्वयम्भूस्थितिविभ्राजी सम्पन्नवसुधास्थितिः ।
[4]स्फुरद्धराङ्कसंशोभी [5]सुक्षमासमलङ्कृतः ॥ १३ ॥

भूमिः ।

(१२) स इति पृथक् पदम् । व्योमासङ्गेन विद्योती । पक्षे सव्ये वामे उमायाः पार्व्वत्याः सङ्गेन विद्योती । सत् प्रशस्तं यन्नभसि गमनं तत्र स्थितिरस्येति । पक्षे सन्ना नष्टा भोगे मनसः स्थितिरस्येति । 'खर्पावशरि' इति विसर्गलोपः । अभ्रान्तः आकाशान्तः, न भ्रान्तश्च । सदा सर्व्वदा काशं काश-कुसुम्, सद् गगनं च ॥

(१३) स्वयं आत्मना भुवि स्थित्या विभ्राजी । पक्षे स्वयम्भूः ब्रह्मा शिवो वा । (*) सम्पन्ना वसुधा* च । स्फुरन्त्याः धरायाः अङ्कं क्रोडः । पक्षे हरस्य शिवस्याङ्कम् । सुशोभना क्षमा पृथ्वी, क्षान्तिश्च ॥

---

१ 'अभ्रान्तस्थितिरोचिष्णुः' B. D.

२ 'सदाकाशक्षतस्थितिः' B. D.    ३ B. पुस्तके नास्ति.

४ 'स्फुरद्धराङ्कसंशोभी' B., 'स्फुरद्धराङ्गसंशोभी' D.

५ 'सक्षमा' B.

* 'सम्पदा नवा सुधावत् स्थितिरस्येति । सम्पन्ना वसुधा च ।' इति स्यात् ।

सदाबलिसमुल्लासी सज्जपातालवैभवः।
अहीनभोगविभ्राजी भूदारस्थितिसुन्दरः[१] ॥ १४ ॥

पातालम्।

सश्रीकाननरोचिष्णुः कान्तारचितवैभवः।
अधिकासारसारश्रीर्विधुनीतश्रियं वहन् ॥ १५ ॥

वनादि।

(१४) सदा बलिर्यत्रेति सदाबलि पातालम्। पक्षे सतां आवलिः समूहः। सदा सर्व्वदा बलिः पूजोपकरणं, चिबलिश्च। सज्जं उत्तमं पाताले वैभवं अस्येति। पक्षे सती प्रशस्ता जपा ओड्रश्च (पा)तालं च, तयोर्वैभवं यत्रेति। अहिः सर्पः तस्य इनः प्रभुः वासुकिः तस्य भोगो यत्रेति अहीनभोगं पातालम्। पक्षे अहीनो महान् भोगः सुखं यत्र। भूदारो वराहः तस्य स्थितिर्यत्रेति भूदारस्थितिः पातालम्। पक्षे भुवि या उदारा स्थितिः ॥

(१५) श्रीसहितं यत्काननं, सश्रीकं आननं सुखं च। कान्तारो वर्त्म दुर्गमम्। तत्र चितं व्याप्तम्। कान्तया रचितं च। अधिकासारं कासारे अधि। आसारो धारासम्पातश्च। विशिष्टा धुनी नदी तया इतां श्रियम्। पक्षे विधुना चन्द्रेण विष्णुना वा नीतां श्रियम् ॥

१ 'पेशलः' D.

स्वर्णस्थितिमनोहारी [1]सदानीरोचितस्थितिः ।
सज्जलक्षणविद्योती सदम्भस्थितिपेशलः ॥ १६ ॥

जलाधारः ।

सम्पन्नवे श्मनि स्थायी सदनस्थितिभासुरः ।
[2]सद्मनः स्थितिमुद्बिभ्रत्सुशोभिनिलयस्थितिः[3] ॥ १७ ॥

गृहाधारः ।

(१६) सुशोभनं अर्णः तोयम्, स्वर्णं सुवर्णं च । पूर्व्ववद्वि-सर्गलोपः । सदा सर्व्वदा नीरं जलम् । स इति पृथक् पदम् । दानी दाता । इरा भूः वाक् श्रीर्वा तदुचितस्थितिः । सत् प्रशस्तं जलं तत्र चणं व्याप्य विद्योती । चणेन उत्सवेन वा । पक्षे सज्जं उत्तमं लक्षणं चिह्नम् । सत् प्रशस्तं अम्भः, दम्भरहितश्च ॥

(१७) सम्पदा नवे अश्मनि पाषाणे । पक्षे स्पष्टम् । सत् प्रशस्तं अनः शकटं तस्य स्थितिः । पूर्व्ववद्विसर्गलोपः । सत् मनः, गृहस्य स्थितिं च । 'यरोऽनुनासिके' इति वा ग्रहणादनुनासि-काभावः । सुशोभी निलयो गृहं तत्र । पक्षे सुशोभिनि शोभमाने लये विनाशे ध्याने वा स्थितिः ॥

१ 'सदानीरोचितस्थितिः' B.
२ 'सद्मतः' B., 'सद्मनस्थि' D.
३ 'मलये स्थितः' B.

अहो वामनताटोपः सदाखर्वतमस्थितिः ।
[1]अधिकं प्रांशुसंशोभी सर्वदावालसद्द्युतिः[2] ॥ १८ ॥

आकारः ।

[3]अचलस्थितिविद्योती सदास्थिरचितस्थितिः[4] ।
सत्वरोचितलक्ष्मीको मनोज्ञतरलक्षणः ॥ १९ ॥

स्थिरादिः ।

(१८) वामनता खर्व्वता तया आटोपोऽस्येति । पक्षे वामः शोभनः प्रतिकूलो वा, तत्र तेन वा नतो नम्र आटोपो यस्येति । खर्व्वतमो ऽतिवामनः । पक्षे सदा अखर्व्वतमपि स्थितिरस्येति । पूर्व्ववद्विसर्गलोपः । प्रांशुः दीर्घः । पक्षे अधि अधिकं कम्रः कम्पनशीलः अंशुः करः । बालः अल्पाकारः । पक्षे सर्व्वस्मिन् दावे वने अलसद्युतिः निस्तेजद्युतिः ॥

(१९) अचलो गिरिः, अचलं चरत् (?)* । सदा स्थिरा स्थैर्य्यवती चिता व्याप्ता द्युतिरस्येति । पक्षे सदा अस्थ्ना कीकसेन रचितद्युतिः । सत्त्वेन रोचिता, सत्वरा उचिता च लक्ष्मीर्यस्य । मनोज्ञतरं अतिशोभनं लक्षणं यस्य । पक्षे मनोज्ञः तरलः क्षणः उत्सवो यस्य ॥

१ 'अधिकप्रांशु' B. २ 'सर्वदावालसस्थितिः' B.
३ 'अचलास्थिति' D. ४ 'चितद्युतिः' B. D.

* 'चलं चरम्' इति स्यात् ।

उपकण्ठस्थितिं बिभ्रत्सनील(ड?)स्थितिपेशलः[1] ।
[2]अभ्यर्णस्थितिविभ्राजी गङ्गाम्बुनिकटस्थितिः ॥२०॥

समीपम् ।

परमश्लाघी विशदच्छायः
[3]स्वचलच्छायो विशद(हृद्य?)प्रतिभः ।

(२०) उपकण्ठः समीपं, कण्ठसान्निध्यं च । सनीडः समीपं तत्र स्थित्या पेशलः शोभनः । पक्षे स इति पृथक् पदम् । नीडस्थितिः शोभा । नीडे कुलाये स्थितिरिति वा । अभ्यर्णो निकटः तत्र स्थितिः । अभ्यर्णः अर्णसि तोये स्थितिः । गङ्गाया अम्बुनि जले कटस्य गण्डस्य स्थितिरस्य । पक्षे स्पष्टम् ॥

(२१) पक्षे श्लेषान्तरमाह । परमश्लाघावान् । पक्षे परं अश्लाघी । अच्छायः छायायाः अभावो यस्य । विशदा निर्मला छाया यस्य च । अत्यर्थं अचला छाया यस्य । पक्षे स्वकीया चला छाया यस्य । हृदि चित्ते अप्रतिभः । हृद्या प्रतिभा यस्य इति च । अपिनद्धं आच्छन्नं अङ्गं यस्येति । पक्षे न पिनद्धं अङ्गं यस्येति ।

१ 'सनीड़स्थितिपेशलः' B. D. २ 'सभ्यर्ण' D.
३ 'स्वचलाद्यो(?)हृद्यप्रतिभः' B., 'स्वचलच्छायो हृद्यप्रतिभः' D.

अपिनद्धाङ्गः कान्तोऽङ्गेन
प्रखरोऽत्यन्तं क्षितिमापन्नः ॥ २० ॥

उक्तवैपरीत्यम्।

इति[1] तृतीयं कुसुमं श्लेषस्तबके प्रकीर्णकाख्यम् ॥ ३ ॥

---

'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।'

इति वचनात् अपि शब्दस्याऽकारलोपः। पक्षे अङ्गे शरीरे कान्तिः। पक्षे प्रकृष्टः खरो गर्द्दभ इव। क्षितिं पृथ्वीं आपन्नः। पक्षे क्षिति माऽऽपन्नः न प्राप्तः। माङ् निषेधे॥

उक्तार्थस्य वैपरीत्यं विपर्य्ययः।

इति श्री द्वितीयस्तबके तृतीयं कुसुमम् ॥ ३ ॥

---

१ 'इति द्वितीये श्लेषस्तबके संकीर्णो नाम तृतीयं कुसुमम् ॥' B. D.

एक[1]मात्मेन्द्रहस्त्यश्वगजास्यरदशुक्रदृक्।
द्वयं पक्षनदीकूलासिधारारामनन्दनाः॥ १॥
त्रयं कालाग्निभुवनगङ्गामार्गेशदृग्गुणाः।
ग्रीवारेखा कालिदासकाव्यं शूलशिखावलिः॥ २॥
सन्ध्याः पुरः पुष्कराणि रामविष्णुज्वराङ्घ्रयः[2]।

(१) एकं एकार्थसूचकम्। आत्मा ब्रह्म। इन्द्रः। हस्त्यश्वौ ऐरावणोच्चैःश्रवसौ। गजास्यो गणेशस्तस्य रदो दन्तः। शुक्रस्य उशनसो दृक् चक्षुः।

द्वयं द्व्यर्थसूचकम्। पक्षौ मासपूर्व्वापरार्द्धौ। असेः खड्गस्य धारे द्वे पार्श्वे। रामनन्दनौ कुशलवाख्यौ।

(२) त्रयं त्र्यर्थसूचकम्। कालाः भूतभविष्यद्वर्त्तमानरूपाः। अग्नयो दक्षिणार्हगार्हपत्याहवनीयाः। भुवनानि स्वर्गमर्त्त्य-पातालानि। गङ्गामार्गाः भुवनत्रयगतिभेदात् त्रयः। ईशस्य शिवस्य दृशो नेत्राणि। गुणाः सत्त्वरजस्तमांसि। कालिदासकाव्यं मेघदूत-रघुकुमाराख्यम्। शूलशिखाः त्रिशूलस्याग्राणि। वलिः त्रिवलिः।

(३) सन्ध्याः प्राह्णमध्याह्नसायाह्नरूपाः। पुराणि मयर-चितानि दैत्यपुराणि। पुष्कराणि सितासितलोहितानि, तीर्थानि वा। रामा रामभार्गवयादवाः। विष्णुज्वराङ्घ्रयः त्रयः। तथा च—

१ 'एक आत्मेन्द्र' B. D. २ 'ज्वरांघ्रयः' B.

चत्वारि वेदब्रह्मास्यवर्णाब्धिहरिबाहवः[1] ॥ ३ ॥
स्वर्दन्तिदन्तसेनाङ्गोपाययामयुगाश्रमाः।
पञ्चपाण्डवरुद्रास्येन्द्रियस्वर्द्रुव्रताग्नयः ॥ ४ ॥
महापापमहाभूतमहाकाव्यमहामखाः।

'ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः।'

चत्वारि चतुष्टयसूचकानि। एवं सर्व्वत्र। वेदाः ऋक्सामाथर्वयजूंषि। ब्रह्मास्यानि ब्रह्मणो मुखानि। वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्राः। अब्धयः पूर्व्वापरोत्तरदक्षिणाः समुद्राः। हरेः कृष्णस्य बाहवो भुजाः।

(४) स्वर्द्दन्तिनः ऐरावणस्य दन्ताः। सेनाङ्गं हस्त्यश्वरथपादातम्। उपायाः सामदानभेददण्डाः। यामाः दिनरात्र्योः प्रहराः। युगानि सत्यत्रेताद्वापरकलयः। आश्रमाः ब्रह्मचर्यादयः। तथा च—

'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये।' इत्यमरः।

[पञ्च] युधिष्ठिरभीमार्जुननकुलसहदेवाः। रुद्रस्य शिवस्य आस्यानि मुखानि। इन्द्रियाणि त्वक्चक्षुःश्रोत्रघ्राणरसनानि। स्वर्गस्य द्रवो वृक्षाः स्वर्द्रवः मन्दारपारिजातसन्तानकल्पवृक्षहरिचन्दनानि। व्रताग्नयः पञ्च, तापव्रतस्य अग्नय इत्यर्थः।

(५) महापापानि ब्रह्महत्यासुरापानस्वर्णस्तेयगुर्व्वङ्गनागमनानि*। महावाक्यानि। महामखाः वैश्वदेवादयः। तथा च—

१ 'हरिबाहवः (वः)' B.

* 'तत्संसर्गी च पञ्चमः' इति स्मरणात् पञ्चमस्यापूर्त्तिः।

पुराणलक्षणान्यङ्गानिलवर्गेन्द्रियार्थकाः[1] ॥ ५ ॥
षड्वज्रकोणत्रिशिरोनेत्रतर्काङ्गदर्शनम् ।
चक्रवर्तिमहासेनवदनर्तुगुणा[2] रसाः ॥ ६ ॥

'पाठो होमश्च तीर्थानां सपर्य्या तर्प्पणं बलिः ।
एतैः पञ्च महायज्ञा ब्रह्मयज्ञादिनामकैः ॥' इत्यमरः ।
'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥'

अङ्गानिलाः—

'प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।'

वर्गाः कुचुटुतुपवः । इन्द्रियार्थाः विषयाः शब्दरूपरसस्पर्श-गन्धाः ।

(६) [षट्] वज्रस्य अग्नेः कोणः । त्रिशिराः रावणपुत्रः तस्य नेत्राणि । व्याप्यप्रसङ्ग व्यापकप्रसङ्ग इति तस्यापि अवयवाः विषय-परिशोधनव्याप्तिग्राहकादयः षट् । दर्शनानि वैशेषिकन्याय-मीमांसावेदान्तसाङ्ख्यपातञ्जलाख्यानि । चक्रवर्त्तिनो वेनमान्धातृ-धुन्धुमारपुरूरवाकार्त्तवीर्य्यार्जुनाः । महासेनस्य कार्त्तिकेयस्य वदनानि । ऋतवो वसन्तग्रीष्मादयः । रसाः मधुरतिक्तकषाय-कटुम्ललवणरूपाः । गुणाः सन्धिविग्रहादयः ।

१ 'पुराणलक्षणाङ्गानि वर्णवर्गेन्द्रियार्थकाः ।' D.
२ 'वदनानि गुणा' B. D.

सप्त पातालभुवनमुनिद्वीपार्कवाजिनः ।
[1]वाराब्धिस्वरराज्याङ्गव्रीहिवह्निशिखाग्नयः ॥ ७ ॥
अष्टौ योगाङ्गवस्वीशमूर्तिदिग्गजसिद्धयः ।
ब्रह्मश्रुतिव्याकरणदिक्पालाहिकुलाचलाः[2] ॥ ८ ॥

(७) [सप्त] अतलवितलसुतलरसातलतलातलमहातलपातालानि। भुवनानि भूर्भुवःस्वर्महर्जनस्तपस्सत्यरूपाणि। मुनयो मरीच्यङ्गिरोऽत्रिप्रमुखाः। द्वीपाः जम्बूप्लक्षादयः। अर्कस्य सूर्य्यस्य वाजिनः अश्वाः। वाराः रविसोमादयः। अब्धयः लवणेक्षुरस-प्रभृतयः। स्वराः षड्जमध्यमादयः। राज्याङ्गानि 'स्वाम्यमात्य सुहृत् कोषो राष्ट्रदुर्गबलानि च।' व्रीहयो धान्यानि माषादयः। वह्निशिखाः ज्वलिनीतापिनीधूम्रेत्यादयः। अग्नेः सप्त जिह्वारूपाः शिखाः। तथा च अग्नेर्जिह्वाः सप्त—

'हिरण्या गगना रक्ता कृष्णान्या सुप्रभा मता।
बहुरूपाऽतिरक्ता च जिह्वाः सप्त हविर्भुजः।'

(८) [अष्ट] योगाङ्गानि यमनियमादयः। वसवो देवगण-भेदाः। ईशमूर्त्तयो वह्नि*चन्द्रसूर्य्याः पञ्चभूतानि यज्वा च। दिग्गजाः ऐरावणपुण्डरीकादयः। सिद्धयः—

---

१ 'वारेतिस्वरराज्याङ्गधातुवह्निशिखादयः' B., 'वाराब्धिस्वर-राज्याङ्गव्रीहिवह्निशिखादयः' D. २ 'दिक्पालाहिकुलादयः' B.

* अत्र 'चन्द्रसूर्य्यौ' इति चेत्समीचीनम्। अग्नेः परिगणने नवत्वापत्तेः। अग्नेस्तेजस्यन्तर्भावाद्विवक्षितिरपि।

**नवाङ्गद्वारभूखण्डछिन्नरावणमस्तकाः ।**

**व्याघ्रीस्तनसुधाकुण्डशेवध्यङ्करसग्रहाः[१] ॥ ८ ॥**

'अणिमा लघिमा चैव प्राकाम्यं महिमा तथा ।

ईशित्वं च वशित्वं च प्राप्तिः कामावशायिता ॥

ब्रह्मणो विधातुः श्रुतयः श्रवणानि । व्याकरणानि माहेश्वर-कपालिसवत्सकलापप्रभृतयः । दिक्पालाः इन्द्रवह्निप्रभृतयः ।

'इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ।

कुबेर ईशः पतयः पूर्व्वादीनां दिशां क्रमात् ।' इत्यमरः ।

अहयोऽनन्ततक्षकादयः । कुलाद्रयो वर्षाणां सीमापर्व्वताः हिमालयप्रभृतयः ।

(८) [नव] अङ्गस्य शरीरस्य द्वाराणि मुखनासिकाद्वयश्रोत्रद्वय-नेत्रद्वयशिश्नगुदानि । भूखण्डाः इलावृतकेतुमालभद्राश्वप्रभृतयः । छिन्नाः छिन्नाः रावणस्य मौलयो मस्तकानि । मूलशीर्षमेकं विहाय नव मस्तकानि नित्यं छित्त्वा शिवाय नैवेद्यानि कृतानीति प्रसिद्धिः । अमृतस्य नव कुण्डानि पुराणादौ प्रसिद्धानि । शेवधयः । अङ्गानि शरीरावयवाः हस्तपादादयः । अङ्केति पाठे एकद्वित्वादिसङ्ख्यासूचका वर्णा (अङ्काः) नवैव । यथा—१-२-३-४-५-६-७-८-९ । पुनर्दशकेन एते एव वर्त्तन्ते । रसाः शृङ्गारादयोऽष्टौ, शान्तश्च नवमो रसः । ग्रहाः सूर्य्यचन्द्रादयः ॥

१ 'सेवध्यङ्ग' B.

दशहस्ताङ्गुलीशम्भुबाहुरावणमौलयः।
कृष्णावतारदिग्विश्वेदेवावस्थेन्दुवाजिनः[1] ॥ १० ॥
एकादश महादेवाः सेनाश्च कुरुभूपतेः।
[2]द्वादशार्का मासराशिसङ्क्रान्तिगुहबाहवः[3] ॥ ११ ॥
सारिकोष्ठकसेनानीनेत्रभूपतिमण्डलाः[4]।
त्रयोदश स्युस्ताम्बूलगुणा अथ चतुर्दश ॥ १२ ॥

(१०) [दश] कृष्णावताराः मत्स्यकूर्मवराहादयः। दिग्वि-दिग्भेदा अष्टौ, ऊर्द्धं चाधश्च द्वे इति दश दिशः। विश्वेदेवाः नाम गणदेवाः दश। तथा च—'विश्वेदेवा दश स्मृताः' अवस्थाः बाल्यादयः। इन्दोः चन्द्रस्य घोटकाः वाजिनो दश ॥

(११) [एकादश] महादेवाः एकादश रुद्राः। कुरुभूपतेः दुर्य्योधनस्य सेनाः अक्षौहिण्यः।

[द्वादश] अर्काः द्वादशादित्याः। मासाः पौषादयः। सङ्क्रान्तयः महाविषुवादयः। गुहस्य कार्त्तिकेयस्य बाहवो भुजाः द्वादश। षण्मुखत्वात्तस्य।

(१२) सारिकोष्ठकं पाशकगृहाणि। सेनान्यः कार्त्तिकेयस्य नेत्राणि द्वादश। राजचक्रं भूपतिमण्डलम् ॥

[त्रयोदश] गुवाकगुणाः। तथा च—

'ताम्बूलं कटु तिक्तमम्लमधुरक्षारं कषायान्वितं
वातघ्नं कफनाशनं कृमिहरं दुर्गन्धिदोषापहम्।

---

१ 'विश्वदेवावस्थेन्दु' B. २ 'द्वादशार्कगाशिमास' B.
३ 'गुरु (ह ?) B., 'स्कन्द' A.
४ 'भापितमण्डलः (लाः ?) B., 'भ्मापतिमण्डलाः' D.

'विद्यायममनुस्वाराड्भुवनध्रुवतारकाः ।
तिथयः स्युः पञ्चदश षोडशेन्दुकलाम्बिकाः[१] ॥१३॥
अष्टादश द्वीपविद्यापुराणस्मृतिधान्यकम् ।
विंशती रावणभुजाङ्गुल्योऽथ शतं यथा ॥ १४ ॥

वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं
ताम्बूलस्य खलु त्रयोदश गुणाः स्वर्गेऽपि तद्दुर्लभम् ॥'

(१३) [चतुर्दश] विद्याः व्याकरणादयः । यमाः यमाचार्य्यादयः । स्वाराजः इन्द्रवासवादयः । भुवनानि सप्त पातालानि भूरादीनि च सप्त । ध्रुवमण्डलं व्याप्य परितो या निवसन्ति तारकाः ॥

[पञ्चदश] तिथयः प्रतिपदादयः ।

[षोडश] इन्दोः चन्द्रस्य कलाः । अम्बिकाः षोडशमातृकाः ।

(१४) [अष्टादश] द्वीपाः जम्ब्वादयः सप्त, सिंहलादयः उपद्वीपाः एकादश । व्याकरणादयः चतुर्दश, आयुर्व्वेदादयः चतस्रः । पुराणानि ब्राह्ममत्स्यादीनि । स्मृतयो मन्वादयः । धान्यानि कलमादयः ॥

[विंशतिः] रावणस्य भुजाः विंशतिः । हस्तपादद्वयस्याङ्गुल्यो विंशतिः ।

---

१ 'विद्यान्वयमनु' B. २ 'कला मताः' D.

धार्त्तराष्ट्राः शतभिषक्तारकाः पुरुषायुषम्।
रावणाङ्गुल्यब्जदलशक्रयज्ञाब्धियोजनम्॥ १५॥
सहस्रं जाह्नवीवक्त्र[1]शेषशीर्षाम्बुजच्छदाः।
[2]रविबाणार्जुनकरा वेदशाखेन्द्रदृष्टयः॥ १६॥

तेषां[3] यथासम्भवमुदाहरणम्:—

एकेन भूमिरिव मेरुमहीधरेण
[4]वक्षःस्थली मधुरिपोरिव कौस्तुभेन।

(१५) [शतम्] धार्त्तराष्ट्राः दुर्य्योधनादयः। शतभिषादि नक्षत्राणि। पुरुषाणामायूंषि। अब्जदलानि अब्जस्य पद्मस्य पत्राणि। शक्रयज्ञाः इन्द्रस्याश्वमेधाः। मध्यस्थितलङ्कादिद्वीपावधेरब्धेः समुद्रस्य शतयोजनप्रमाणविस्तारम्॥

(१६) [सहस्रम्] जाह्नवीवक्त्र गङ्गायाः समुद्रप्रवेश मुखानां सहस्रम्। शेषस्य अनन्तनागस्य शीर्षाणि मस्तकानि। अम्बुजस्य कमलस्य च्छदाः पत्राणि। रविबाणार्ज्जुनकराः, रवेः कराः किरणाः। बाणस्य दैत्यसुतस्य, अर्ज्जुनस्य कार्त्तवीर्य्यस्य कराः हस्ताः। वेदस्य शाखाः कौथुमिकामाध्यन्दिनादयः। इन्द्रस्य दृष्टयः चक्षूंषि॥

१ 'वक्त्र' B. D. २ 'रविपाण्यर्जुन' B.
३ 'एतेषां क्रमेण यथा' B., 'एतेषां यथाक्रमेण यथासम्भवमुदाहरणीयम्। यथा' D. ४ 'वक्षस्थली' B. C.

द्यौरिन्दुनेव दशनेन गणाधिनाथ-
 भुण्डेव देव! भवतालमकारि धात्री[1] ॥१७॥

पीड्यमाना दृढं ताभ्यां
 प्रियदोर्भ्यामिव प्रिया ॥
[2]सिष्विदे च चकम्पे च
 सम्मुमोह च सा चमूः ॥ १८ ॥

कण्ठोऽयमस्या मृदुमध्यतार-
 स्वरत्रयाधार इति त्रिरेखः।
मुदं ददाति त्रिजगज्जयाय
 प्रयाणशङ्खो मकरध्वजस्य ॥ १९ ॥

किं रोमराजीयमुनाप्रवृत्तो[3]
 बलित्रिदण्डीं कलयन्ननङ्गः।
कस्यापि रूपेण जितस्तपस्वी
 तमेव जेतुं तनुते[4] तपांसि ॥ २० ॥

(१७) गणाधिनाथो गणेशः तस्य भुण्डा भुण्डादण्डः। भुण्डा भुण्ड इति द्वैरूप्यम् ॥

(२०) बलिः त्रिवलिः सैव त्रिदण्डी दण्डत्रयसमाहारः। दण्डास्तु कोपीनवेणुशिखारूपाः। तपस्वी वराकः ॥

---

१ 'महिता धरित्री' D. २ 'सिखि(ष्वि)दे' B.
३ 'तटेऽस्या' B., 'त्रिरोमराजीयमुनाप्रवृत्तो' D.
४ 'तपते' D.

वृकोदराद्याः सहसा महाश्रियः
   महोदरास्तं परिवव्रिरे नृपम्।
सुहस्तिनो हस्तमिवासुहृद्गण-
   [1]च्छिदानिदानं रणपारदा रदाः[2] ॥ २१ ॥
पञ्चत्वं पञ्चेषो-
   र्जगदारम्भाय पञ्चभूतानि[3]।
पञ्चशराः(रौ!) कुसुमेषो-
   [4]र्दिवि (गिरि!) भुवि गिरिशस्य जयति
                        पञ्चमुखी ॥ २२ ॥

(२१) वृकोदराद्याः भीमादयः। नृप युधिष्ठिरम्। सुह-स्तिनः ऐरावणस्य हस्तः शुण्डः। असुहृद्गणस्य रिपुवृन्दस्य च्छिदायाः छेदस्य निदानं आदिकारणम्। रणं पारं ददतीति रणपारदाः। रदाः दन्ताः। जितपारदा इति च पाठः।

(२२) गिरिशस्य शिवस्य पञ्चमुखी जयति। पञ्च मुखानि समाहृतानि पञ्चमुखी। जयतेरुत्कर्षार्थत्वादकर्मकत्वम्। किम्भूता पञ्चमुखी। पञ्चेषोः कामस्य पञ्चत्वं निधनरूपम्। जगतामारम्भाय आरम्भार्थम्। पञ्चभूतानि पृथिव्यप्तेजोवाय्वा-

१ 'च्छिदां' B.     २ "रणपारकोविदाः' D.
३ 'महाभूतानि' D. अयं पाठश्छन्दोभङ्गत्वादुपेक्षणीयः।
४ 'गिरिभुवि' A. B

तवोग्रमूर्त्तेः शरभूः प्रतापो
　दध्रे षडङ्गस्य षडाननत्वम् ।
यत्कुण्डलानीव विरेजुरस्यै-
　श्चण्डद्युतेर्द्वादश मण्डलानि ॥ २३ ॥
लोकेषु सप्तसु दधत्यतिगौरवं ये
　येषां ग्रहा उपरि सप्ततुरङ्गमस्य ।
सप्तर्षयो घनपिशङ्गजटा जयन्ति
　ते सप्त हेतय इव ज्वलनस्य मूर्त्तीः (र्त्ताः)[१]
　　　　　　　　　　　　॥ २४ ॥

कामरूपाणि उपादानकारणानि । गिरिभुवि पार्व्वत्याम् । कुसुमेषोः कामस्य । पञ्चशरी पञ्चबाणस्वरूपा । वशीकरणत्वात् । सर्वत्र व्यस्तरूपकम् ।

(२३) तव उग्रमूर्त्तेः उद्भटरूपस्य षडङ्गस्य-
　'सर्व्वज्ञता तृप्तिरनादिबोधः
　स्वतन्त्रता नित्यमलुप्तशक्तिः ।
　अनन्तशक्तिश्च विभोरमूनि
　षडाहुरङ्गानि महेश्वरस्य ॥'

अथ च वाद्या(द्या ?)दिषडङ्गवतः । अथ च शिवस्य मूर्त्तेः । शरभूः शरवणे जातः । षडाननत्वं षण्मुखत्वम् । अथ च षड्मुखगामित्वम् ॥

१ 'मूर्त्ताः' B. C. D.

गीतं दिगन्तेषु यशोऽष्टमूर्ति-
मूर्तिप्रभं तेऽष्टदिगीशमूर्त![1]।
अष्टाङ्गयोगात्कलिताष्टसिद्धिः
श्रोतुं दधेऽष्टश्रुतितां विधाता ॥ २५ ॥

अन्तर्लसद्दन्तसितद्युतीनि
छता(त्ता)नि लङ्काधिपतेः शिरांसि।
नवापि लक्ष्मीं मणिभासुराणां
दधुर्नवानामपि शेवधीनाम्[2] ॥ २६ ॥

निजाश्रुनीरैः स्नपिता द्वि(द्वि?)षद्(द्?)भिः[3]
प्रदीपिता मौलिमणीस्रजाभिः।
दशापि ते पादनखाः प्रयान्ति
दिशां दशानामपि दर्पणत्वम्[4] ॥ २७ ॥

इति द्वितीयस्तबके श्लेषमङ्क्षा नाम चतुर्थं कुसुमम् ॥ ४ ॥

(२५) अष्टमूर्त्तिः शिवः तस्य। मूर्त्तिप्रभं शरीरस्य-च्छ(वि?) रुचि ॥

(२६) छत्ताणि छिन्नानि। शेवधीनां रत्नानाम्।

इति द्वितीये चतुर्थं कुसुमम् ॥ ४ ॥

---

१ 'तेऽष्टदिगन्तमूर्त्तेः' B., 'यशोऽष्टमूर्त्ते मूर्तिप्रतीतेऽष्टदिगीशमूर्त्ते।' D.

२ 'से(शे)वधीनां' B.

३ 'द्विषद(द्?)भिः' D.

४ 'नूनं दिशानामपि दर्पणत्वम्' D.

रूढयौगिकमिश्राख्यास्त्रिधा शब्दाः प्रकीर्तिताः ।
[1]व्युत्पत्तिवर्जिता रूढाः शब्दा आखण्डलादयः ॥१॥
योगो गुणेन क्रियया सम्बन्धेन कृतोऽन्वयः ।
गुणः स्यान्नीलपीतादिर्नीलकण्ठादयस्ततः ॥ २ ॥
सङ्ख्या अपि गुणा एव वैशेषिकमते ततः ।
पञ्चेषुषण्मुखदशग्रीवैकदशनादयः ॥ ३ ॥
कविरूढिच्युताः शुभ्रवपुःषट्कन्यगादयः ।
क्रियाः करोतिप्रमुखास्ततः शब्दा [2]हरादयः ॥ ४ ॥
[3]स्वान्नेतृपतिभुक्पालधवमत्वर्थकादिभिः ।
सम्बन्धे स्वामिनो नाम कविरूढ्या निगद्यते ॥ ५ ॥

(१) व्युत्पत्तिवर्ज्जिताः इति । यत्तु व्युत्पत्तिः क्रियते मण्डपादिशब्दानाम् । मण्डं पिबतीति मण्डपः । कुशं लातीति कुशलः । एतत्तु व्युत्पत्तिमात्रम् । नान्वयः । तथा चोक्तम् ।

(४) कविरूढिच्युताः महाकविभिरप्रयुक्ताः इत्यर्थः ।

(५) सम्बन्धयौगिकमाह । स्वान्नेत्(।च ?)ति । स्वात् धनादेः । नेता नायकः ।

१ 'उत्पत्ति' B., 'व्युत्पत्ति' D.

२ 'लघुहरादयः' B.

३ 'स्वान्वे(न्ने ?)तृपतिभुक्पालधवमत्वर्थकादिभिः' B., 'स्वान्नेतृपतिभुक्पालधनं मत्वर्थकादिभिः' D.

भूनेता भूपतिर्भूभुग् भूपालो भूधवोऽशुमान्[1]।
कविरूढ्यैव न त्वेवं भूमानंशुभुगित्यपि ॥ ६ ॥

जन्यादिधातृकरसू-
स्रत्कर्तृस्रष्टृसृग्जनकमुख्याः।
जनकाद्योनिजजनिभू[2]-
सम्भवरुहभूतिसूत्याद्याः[3] ॥ ७ ॥

[4]तद्यथा—

विश्वविधाता, विश्वकरः, विश्वसूः, विश्वकृत्, विश्वकर्ता, विश्वस्रष्टा, विश्वसृक्, विश्वजनकः।

जनकाद्यथा—

आत्मयोनिः[5], आत्मजः, आत्मजनिः[6], आत्मभूः[7], आत्मसम्भवः, आत्मरुहः, आत्मसूतिः[8]। आदिशब्दाद्वात्स्यायनादयः[9]।

विश्वं सूते विश्वसूः। आत्मनः सकाशात् भवतीति आत्मभूः। आत्मनः सकाशात् सूतिः प्रसवः सम्भवो यस्य स आत्मसूतिः।

१ 'नृधनोंऽसुमान्' B., 'भुधनोंऽसुमान्' D.
२ 'जनिसू' B., 'जनिभु' D.
३ 'भूत्ययाद्यास्तु' B.
४ 'जन्याद्यथा' B., 'तद्यथा' D
५ 'आत्मज्यो (यो) निः' B.
६ 'आत्मजनितः' B.
७ 'आत्मसूः' B.
८ 'आत्मभूतिः। दैत्यः' B. 'आत्मभूतिः' 'आत्मसूतिः' D.
९ 'आदिना वा' D.

धार्यात्पाण्यस्त्रमौल्यङ्कध्वज[1]भृन्मण्डनसमानाः।
[2]धव(र?)भर्तृमालिमत्वर्थशालिशेखरसद्मास्त्र॥ ८॥

यथा शूली तथा सर्पी न शशी हरिणी तथा।
यथेन्दुमौलिर्न तथा गङ्गामौलिस्तु वाचकः॥ ९॥

भोज्यादन्धःपायिलिड्भुग्व्रतपानाशनादयः।
[3]भोज्यभोजकसम्बन्धाद्यथा स्युरमृतान्धसः॥ १०॥

(८) धार्य्यात् कुन्तादेः। पाण्यादयो यथा। दण्डपाणिः। चक्रायुधः। चन्द्रमौलिः। मृगाङ्कः। वृषध्वजः। पाशभृत्। शशिभूषणः। इत्येवमादयः। चक्रधरः। पाशभर्त्ता। क्षिति-धृत्। किरणमाली। शशी। मयूखशाली। चन्द्रशेखरः। इत्येवमादयः। सदृक्षाः एतत्समानार्थाः। अत्र तेऽपि योज्याः।

(९) सर्प्पीत्येवमादयः कविरूढिच्युताः इत्यर्थः।

(१०) भोज्यात् अन्धादयो यथा। अमृतं अन्धः अन्नं येषां ते अमृतान्धसः देवाः। एवं मधुपायी। मधुलिट्। भृङ्गभुक्। मधुव्रतः। मधुपः। क्रव्यादः। पवनाशनः। इत्येवमादयः।

१ 'ध्वजमण्डन' B.
२ 'धरभर्तृ' B., 'धरभरभर्तृ' D.
३ 'भोज्यभोजन' D.

पत्युः कान्तादयितावधूप्रणयिनीप्रियाङ्गनातुल्याः।
पत्न्याः प्रणयिधवाद्याः पतिपत्नीभावसम्बन्धात्॥ ११॥
सख्युः सखिप्रभृतयो [1]वाह्याद्यानासनप्रायाः।
ज्ञातेः स्वसृतनयात्मजाग्रजावरजसंकाशाः॥ १२॥
आश्रयतः सदनाख्याः सद्मासिशयप्रकाराश्च[2]।
वध्याद्द्विड्जिद्घातिद्वेषिध्रुग्ध्वंसिशासनविपक्षाः[3]॥१३॥

(११) पत्युः कान्तादयो यथा। हरिकान्ता। हरिप्रिया। हरिवल्लभा। शिववधूः। पद्मनाभगृहिणी। शक्रप्रणयिनी। इत्येवमादयः। पत्न्याः प्रणयिधवाद्याः यथा। गौरीप्रणयी। लक्ष्मीदयितः। इत्येवमादयः।

(१२) सख्युः सखिप्रभृतयो यथा। वायुसखः। अग्निसखः। इत्येवमादयः। वाह्यात् यानासनप्रायाः यथा। वृषयानः। गरुडासनः। कुरङ्गवाहनः। इत्येवमादयः।

ज्ञातेः स्वस्रादयः यथा। यमस्वसा। कलिन्दतनया। सूर्य्यात्मजा। इन्द्रावरजः। गरुडाग्रजः। इत्येवमादयः।

(१३) आश्रयतः सदनादयः यथा। बलिसद्म-चिदशालय-दिविषत्-स्वर्व्वासि-स्वशय-बिलेशय इत्येवमादयः। वध्यात् द्विडादयः यथा। मधुद्विट्। जम्भजित्। अन्धकघाती। मधुद्वेषी। दैत्यध्रुक्। बलिध्वंसी। पाकशासनः। बलविपक्षः। इत्येवमादयः।

---

[1] 'शाख्यादाना' D. [2] 'सद्माशयप्रकाराश्च' D.
[3] 'शासनाधिपस्थाः' B., 'शासनविपक्षाः' D.

अप्यन्तकारिसूदनदर्पच्छिद्दमनदारिमथनाद्याः।
[1]सम्बन्धो हि विवक्षात इति पदादेकतोऽपि संयोज्याः॥
१४॥

[2]औचित्यादिबुधैः प्राक्कथिताः सम्बन्धिशब्दास्ते।
वृषस्य यति वाह्यत्वे शङ्करो वृषवाहनः॥ १५॥

धार्यत्वे तु वृषाङ्कोऽयं स्वत्वे वृषपतिस्तु सः॥
व्यक्तिचिन्हाङ्कितो जातिशब्दोऽपि व्यक्तिवाचकः॥१६॥

(१४) नरकान्तक-दैत्यारि-मधुसूदन-बाणदर्पच्छित्-मदन-दमन-पर्व्वतदारि-सुरमथन इत्येवमादयः॥

(१५) सम्बन्धो जन्यजनकादिलक्षणः विवक्षातः पुरुषेच्छया घटितो भवतीति पदात् चिह्नात् एकस्मादपि सम्बन्धिशब्दाः नियुक्ताः। यथा वाहनयोग्यकाले वृषवाहनः।

(१६) धारणे तु वृषचिह्नमात्रलाभात् वृषाङ्कः। युद्धे तु वृषस्य रक्षणात् वृषपतिः। यतः पातीति पतिः त्राता।

यौगिकप्रस्तावे यौगिकविशेषमाह। व्यक्तिचिह्नाङ्कित इति।

१ 'सम्बन्धे' B.
२ 'औचित्यादिबुधैः प्राक्प्रदर्शितसम्बन्धिशब्दास्ते' B.

**यथागस्त्यनिवासा दिग्दक्षिणाशा[1] प्रकीर्त्तिता।**
**शब्दौ विपञ्चसप्तादिवाचकौ विषमायुजौ।**
**योजयेत्त्रिनेत्रपञ्चशरसप्तच्छदादिषु ॥ १७ ॥**

(१७) दक्षिणाशा इत्युदाहरणम्। अत्र सामान्यविशेष-भावसम्बन्धः। नन्वत्र दिक्शब्दो जातिशब्दो न भवति। अनेकव्यक्तिवृत्तित्वाभावात्। तथा चोक्तम्—"नित्यमेकमनेक-व्यक्तिवृत्ति सामान्यं जाति"रिति। प्राचीभेदेनानेकव्यक्तिवृत्ति-ताप्नोति चेत् नैवम्। प्राचीत्यादिका संज्ञा सूर्य्यगतिभेदात् कृता। प्रथमं यत्र सूर्य्यः प्राञ्चति सा प्राची। पश्चात् यत्र प्राञ्चति सा प्रतीची। एवमन्या दिक्। किन्तु दिक् एका नित्या विभ्वी कालकृतविपरीतपरत्वानुमेया च। उच्यते। जातिशब्देनात्र जातिरुपाधिश्च द्वयं विवक्ष्यते। तेन कुत्रापि जातिः व्यक्तिचिह्नाङ्किता व्यक्तिवाचिका भवति। यथा चन्दनतरुः तमालवृक्षः इत्यादि। कुत्रापि उपाधिः स्वव्यक्तिचिह्निता व्यक्तिमेवाचष्टे। यथा अगस्त्यनिवासा दिक् दक्षिणाशा इत्युच्यते। आशाशब्दो ह्यत्र यद्यपि प्राच्यादिषु सामान्येन वर्त्तते तथापि दक्षिणाशा इत्यनेन चिह्निता सती केवलं दक्षिणां दिशमेवा-भिधत्ते। उपाधिः पुनरत्र दिगितराहृत्तित्वे सति केवलं दिग्वृत्तित्वम्। न हि गोत्वादिजातिवत् सामान्यम् ॥

१ 'दक्षिणा परिकीर्त्तिता' B.

इतरान्तो[१] नञ्पूर्वो गुणशब्दोऽर्थं विरोधिनं वक्ति।
[२]यथा सितेतरोऽप्यसित एव प्रतिपद्यते कृष्णः॥ १८॥
जलदादिषु पूर्वपदेषु[३] सरोजमुख्येषु चोत्तरपदेषु।
[४]सुरपतिसमेषु चोभयपदेषु पर्यायपरिवृत्तिः॥ १९॥

पुनर्यौगिकविशेषमाह। विषमायुजाविति। यथा विषमलोचनः। अयुग्मलोचनः। विषमनयनः। विषमबाणः। विषमच्छदः। इत्यादि।

(१८) सम्बन्धकृतयौगिकविशेषमाह। असित एवेत्यादि। कृष्ण एव प्रतिपद्यते ज्ञायते, न पीतरक्तादिः। व्युत्क्रमेण एवकारो योजनीयः। असित इत्यत्र विरोध्यविरोधिभावः सम्बन्धः॥

(१९) जलदादिष्विति। अत्र पूर्व्वपदे पर्य्यायपरिवृत्तिः। यथा वारिद-नीरद इत्यादि। न तथा वारिप्रद-जलदायक इत्यादि। आदिशब्दात् जलदादीनां ग्रहः। सरोजमुख्येष्विति। अथोत्तरपदे पर्य्यायपरिवृत्तिः। यथा सरोरुह-सरोजन्मेत्यादि। न तथा कासाररुह-तडागजन्मेत्यादि। मुख्यशब्दात् पङ्कजादीनां ग्रहणम्।

---

१ 'इतरान्ते' B.

२ 'स यथा सितेतरोऽप्यसित एव' D.

३ 'पूर्वपदे' B. ४ 'सुरसरित्समेषु' B.

इति परिवृत्तिसहाये योगास्ते यौगिकाः शब्दाः।
परिवृत्त्यसहाये ते मिश्रा गीर्वाणतुल्यास्तु ॥ २० ॥

[1]इति द्वितीये श्लेषस्तबके मिश्राख्यं पञ्चमं कुसुमम् ॥ ५ ॥

इति श्रीमद्वाग्भटसूनुमहाकविदेवेश्वरविरचितायां कविकल्प
लतायां [2]द्वितीयस्तबकः सम्पूर्णः ॥ २ ॥

---

सुरपतिसमेष्विति। अत्रोभयपदे पर्य्यायपरिवृत्तिः। यथा सुरेशः सुरपतिः देवेश्वरः इत्यादि। समशब्दात् भूतेश-यक्षेश्वरादीनां ग्रहणम्।

(२०) गीर्व्वाणतुल्या इति। गीः बाणो यस्येति। तुल्य-शब्दात् विष्वक्सेन-सुमनः-पूर्व्वदेवप्रभृतयः॥

इति कविकल्पलताटीकायां बालबोधिकायां द्वितीयस्तबके रूढियौगिकं नाम पञ्चमं कुसुमम् ॥ ५ ॥

---

१ 'B. पुस्तके 'इति' आरभ्य 'कुसुमम्' इत्यन्तं नास्ति।
२ 'द्वितीये श्लेषस्तबके रूढियौगिकमिश्राख्यं नाम पञ्चमं कुसुमम्। समाप्तश्चायं द्वितीयः श्लेषस्तबकः। ग्रन्थसङ्ख्या २८०।' B.

अथ राजेक्षणं गङ्गास्तुतिर्भगवदीरणम् ।
विप्रलापस्तडागादिवर्णनं वादितर्जनम् ॥ १ ॥
इति यत्र निगद्यन्ते क्रमेण कुसुमानि षट् ।
तं वदामि कथाकल्पं सुधाकल्पं समासतः ॥ २ ॥
अर्थिप्रत्यर्थिनोर्यत्र विमतिः सा कथा द्विधा ।
वीतरागकथा चान्या[१] विजिगीषुकथा यथा ॥ ३ ॥

अथ कथास्तवकः ॥

(२) कथायाः कल्पः कल्पनं यत्र । अथवा कथानामाकल्पं नेपथ्यमिव कथास्तबकं । सुधाकल्पं अमृतसमं समासतः संक्षेपात् तं वदामि ।

(३) कथायाः लक्षणपुरःसरं भेदमाह । अर्थिप्रत्यर्थिनोरिति । अर्थी वादी । प्रत्यर्थी प्रतिवादी । अनयोर्यत्र विमतिः विरुद्धा मतिः सैव कथा द्विधा द्विप्रकारा भवति । एकतरा कथा । वीतो रागो विजिगीषा यत्र । वादकथेत्यर्थः । तथा चोक्तम्—'तत्त्वबुभुत्सोः कथावादः ।' यथा गुरुशिष्ययोः कथा । अन्यथा च विजिगीषो रागिणः कथा जल्पवितण्डारूपेत्यर्थः । तथा चोक्तम्—'स्वपक्षस्थापिका परपक्षदूषिका कथा जल्पः । केवलं परपक्षदूषिका कथा वितण्डा ।' तत्र निष्फलत्वाद्वीतरागकथायाः यथेत्यनेन विजिगीषुकथोदाह्रियते ।

१ 'कथान्या च' B.

वादी च प्रतिवादी च प्राश्निकोऽथ सभापतिः ।
चत्वार्यङ्गानि तुङ्गानि कथायाः[1] संप्रचक्षते ॥ ४ ॥
अनिन्द्यः सर्वविद्यासु सर्वालङ्कारपारगः ।
सविता कवितापद्मकानने तर्ककर्कशः ॥ ५ ॥
भरते भारते[2] विज्ञः प्राज्ञो मन्वादिनाऽथ वा ।
सुवेशः पुरुषो गच्छेत्सभ्यान्सम्भावयन्सभाम् ॥ ६ ॥
अतः प्रथमतस्तत्र धरित्रीरमणं प्रति ।
विद्वद्वृन्दप्रमोदार्थरा(मा)शीराशीनुदीरयेत्[3] ॥ ७ ॥
स्वस्त्यस्तु विस्तारियशःप्रशस्ति-
भ्राजिष्णुदोष्णे भवतेऽवते क्ष्माम् ।

(४) तत्र प्रकारमाह । वादी चेत्यादि । प्राश्निकः प्रश्न-कर्त्ता मध्यस्थ इत्यर्थः ।

(६) भरते सङ्गीतशास्त्रे । अथवा पूर्व्वाक्षेपे । मन्वादिने-त्यादिशब्दात् प्राक्तनसंस्कारेण वा ।

(७) धरित्रीरमणं राजानम् । आशीराशीन् आशिषां राशयः समूहाः तान् । 'रो रि' इति रेफलोपे दीर्घः । उदीरयेत् ब्रूयात् ॥

१ 'सभायाः' A.
२ 'भारतेऽभिज्ञः' B. D.
३ 'माशीराशीवदीरयेत्' B.

विपक्षलक्षक्षयदक्षतीक्ष्ण-
कौक्षेयकायाक्षतरक्षणाय ॥ ८ ॥

[१]अतुल्यकल्याणभवनं भव। प्राज्यं साम्राज्यमासाद्य। चतुःसमुद्रमुद्रावच्छेदिनीं मेदिनीं पाहि। प्रतापतापितारिवर्गो भर्गोपमो भूयाः। विनायकोऽवनाय कोविदस्य भवतु भवतः। शारदा शारदाभ्रशुभ्रा[२] विभ्राजतामकुण्ठे भवत्कण्ठे[३]। सूर्यः सूर्यर्चितः प्रचितोपचयमचिरमारचयतु त्वाम्। अमन्दानन्दाय[४] मन्दाकिनी

(८) प्रशस्तिः विरुदादिर्लिपिः तया भ्राजिष्णुः दोः बाहुः यस्येति तस्मै तथा। क्ष्मां पृथ्वीम्। कौक्षेयकः खड्गः। अक्षतं रक्षणं यतः तस्मै अक्षतरक्षणाय ॥

प्राज्यं प्रचुरम्। साम्राज्य सार्व्वभौमत्वम्। आसाद्य प्राप्य हि।

चत्वारः समुद्राः एव मुद्रिका तया अवच्छेदयुक्ताम्।

भर्गोपमः शिवोपमः।

विनायको गणेशः। अवनाय रक्षणाय। कोविदस्य धीरस्य।

शारदा सरस्वती। शारदाभ्रः शरद्घनः तद्वच्छुभ्रा। अकुण्ठे अमन्दे।

सूर्य्यर्च्चितः सूरिभिः पण्डितैः, अर्चितः पूजितः। प्रचितोपचयं प्राप्तधनाद्युपचयम्। आरचयतु करोतु।

---

१ 'अतुल्यकल्यकल्याण' D. २ 'शुभ्रविभ्राजिताम' B.
३ 'तव कण्ठे' D. ४ आन(अम)न्दामन्दसन्दाय' D.

सम्पद्यताम्। [1]भृङ्गीशभृङ्गारशृङ्गारकारिवारिभासुरा सुरापगाऽत्र गात्रमतिमात्रमत्रभवतो[2] भवतः पवित्रयतु। सर्वतः पर्वतसुतापतिः पातु। गङ्गाश्र(भृ?)ङ्गारितशिराः शिवः शिवं दिशतु देवाय। सर्वमङ्गला [3]मङ्गलास्पदं करोतु त्वाम्। प्रभविष्णुर्विष्णुः पुष्णातु जिष्णुतां तव। स दामोदरः सदामोदरतस्त्वयि भवतु। त्वयि करोतु करुणामरुणानुजध्वजः। मुकुन्दः कुन्दसुन्दरयशःस्तव-

सम्पद्यतां भूयात्।

भृङ्गीशः शिवः स एव भृङ्गारं जलपात्रं तत्शृङ्गारकारि सङ्ग-सकारि यद्वारि जलं तेन भासुरा शोभना। सुरापगा गङ्गा। अत्र जगति। गात्र देहम्। अतिमात्रं निर्भरम्। अत्रभवतः पूज्यस्य। भवतः तव।

गङ्गया भृङ्गारितं जलपात्रीकृतं शिरो यस्य। गङ्गाशृङ्गा-रितेति पाठे समालिङ्गितम्। देवाय राज्ञे।

प्रभविष्णुः प्रभुः। पुष्णातु वर्द्धयतु जिष्णुताम्।

सदा सर्व्वदा आमोदरतः आनन्दरतः।

अरुणानुजो गरुडः स एव ध्वजो यस्य स कृष्णः।

---

१ 'भृङ्गीशभृङ्गारकारि' B.

२ 'सत्रभवतः पवित्रयतु' B.

३ 'सर्वमङ्गला सर्वमङ्गलास्पदं त्वां करोतु' B.

कितास्बरं विरचयतु[१] । जायतां निजायताङ्घ्रिभवभुवनैर्भुवनं भूषयन् भगवान् भवदभ्युदयाय[२]। जीव राजीवभूरिव भूरिवत्सरशतानि । चिरं [३]विरञ्चिरिव वञ्चितकालः कलय पुष्कलमायुः । अरविन्दनन्दनो मुदं समुदञ्चयतु । निराविलमिरावलयमामलयमाहिमालयमापालय । जय प्रबलरिपुकुलप्रलयकालाग्नि-

स्तबकिताम्बरं व्याप्ताकाशम् । स्तबकितं जातस्तबकमिव आकाशं यस्मादिति वा ।

जायतां भूयात् । निजः आयतः दीर्घः अङ्घ्रिः तद्भवभुवनैः गङ्गाजलैरित्यर्थः । भगवान् विष्णुः ।

राजीवभूः ब्रह्मा । भूरीणि बहूनि वत्सरशतानि व्याप्य जीव ।

विरञ्चिः ब्रह्मेव । वञ्चितकालः पराजितमृत्युः । कलय प्राप्नुहि । पुष्कलं विस्तरम् । आयुः जीवनकालम् ।

अरविन्दनन्दनः ब्रह्मा । समुदञ्चयतु सम्वर्द्धयतु ।

निराविलं अनिन्द्यं यथा स्यात् । इरावलयं भूगोलम् । 'इरा भू-वाक्-सुराऽप्सु स्यात् ।' आमलयं मलयपर्य्यन्तम् । आहिमालयं हिमालयपर्य्यन्तम् । आ सम्यक् पालय ॥

कालाग्निरुद्रः यमवह्निशिवानां आत्मको मूर्त्तिभेदः ।

१ 'विरचयतु त्वाम्' D. २ 'भवदुदयाय' B.
३ 'विरिञ्चिरिव' B.

रुद्र[1]!। [2]अनन्तगुणमणिगणसमुदयसमुद्र!। द्रविणगणा-गणेयवितरणतृणीकृतगीर्वाणवृक्ष!। भरतभगी[3]रथ-सुरथदशरथरघुनहुषसदृक्ष!। विनयविनमदवनि[4]धर(व!)निवहसुवहचरणचारुचामीकरसुन्दरारविन्द![5]। सहृदयहृदय![6]। प्रमोदमोदमानगोविन्द!। रुद्राणी-रमणचरणपरिचरणचारण![7]। [8]समस्तसामन्तसीमन्ति-

अनन्तः महान्। समुदयः सम्यगुद्गमः।

द्रविणं धनम्। वितरणं दानम्। गीर्व्वाणवृक्षः कल्पतरुः।

सदृक्षः समः।

विनयेन विनमन्तः विनम्राः ये अवनिपतयः भूमिपाः तेषां निवहेन समूहेन सुवहानि सुखेनोह्यानि चरणाः एव चामीकरारविन्दानि स्वर्णपद्मानि यस्य सः।

सहृदयः सज्जनः।

रुद्राणीरमणः शिवः, तस्य चरणस्य परिचरणं परिचर्य्या सेवा तत्र चारणः सेवकः।

सामन्तसीमन्तिनी राजपत्नी। दूरोत्सारणं दूरोत्क्षेपणम्।

१ 'प्रलयवाचाच(दावान?)ल।' B. २ 'अनगणगुण' B.

३ 'सुरथदशरथजयद्रथरघुनघुषसदृक्ष' B.

४ 'दवनिधवनिवह' B.

५ 'चामीकरसुन्दरारविन्द' B., 'चारुचामीकरसुन्दरकरारविन्द' D.

६ 'सदयहृदय' B., 'सुहृदयहृदय' D.

७ 'परिचरणचारुचारण' D. ८ 'नृपजनसामन्त' D.

नीसीमन्तसिन्दूरपूरदूरोत्सारणकारण ॥ निष्कृपकृपाणधारावलुप्त[1] मेदिनीपतिमुण्डमण्डलीमण्डितखण्डीशमूर्तिमहीमण्डल ![2] । बलवदरिबलदलनलीलाखण्डल ! । अतुलतुलापुरुषप्रमुखप्रतन्यमानमहादानसन्तान[3]सन्तोषितसर्वोर्वीसुपर्व[4]प्रणीताशीर्वादनादप्रमोदमानमानस ! । यशोराजहंसोल्लासलीलानिवासमानस ![5] । संरम्भोत्तम्भितासिदम्भोलिलीलादलितारि[6]दन्तावलावलीमुक्तमुक्तावलीफलोज्ज्वल ![7] । राज्यलक्ष्मीरक्षणविचक्षणदक्षिणदोर्दण्ड ![8] । डिण्डीरपिण्डपरिपाण्डुराखण्डयशःश्रीखण्डमण्डितजगदण्ड ![9] । विल-

निष्कृपः कृपारहितः। खण्डीशमूर्त्तिरिति विशेषणं साभिप्रायम्। मुण्डमालाभूषणत्वात् शिवस्यापि ।

भूसुपर्व्वाणो भूदेवाः। एकत्र मानसं चित्तम्। अन्यत्र सरोभेदः।

संरम्भेण कोपेन यः उत्तम्भितः उत्तोलितः असिः खड्गः स एव दम्भोलिः वज्रम् ।

जगदण्डं ब्रह्माण्डम् ।

१ 'लुप्तवृत्तमेदिनी' B. २ 'खण्डीशमूर्त्तिस्वरूपमही' D.

३ 'सम्मान' B. ४ 'सर्वभूसुपर्व' B.

५ 'लीलाविलासमानस' D.

६ 'वलितारि' B. ७ 'मुक्तमुक्ताफलोज्ज्वल' B. D.

८ 'दोर्दण्डोद्दण्डगर्वोड्डिण्डीर' B. ९ 'खण्डमण्डितजगदण्ड' B.

सदवनीवनीपकदारिद्र्यमुद्राविद्राविद्रविणधाराधर !। तर्जितोर्जितधनुर्द्धर !। अङ्गवङ्गकलिङ्गभूलिङ्गतैलङ्ग-मगमगधमलयमालवमरुकुरुनाभीरनाहीरसौवीरकार-वीरकीरकश्मीरहरिकेलकेरलकोशलान्ध्रवैदिचेदिमहा-[1]राष्ट्रसौराष्ट्रलाटभोटवराटवराहाटकराहाटकर्णाटगोट[2]-गौड़चौड़द्रविड़ानन्तनृत्यत्कीर्त्तिनर्त्तकीनिरूपणनिपुण-गीर्वाणगणस्तूयमानमानदोस्तम्भ !। [3]सकलसफलस-मारम्भ !। [4]चातुर्यधर्ममाधुर्यस्थैर्यशौर्यसौन्दर्यसौकुमार्य-मर्यादादयानयाचारविचारदाक्षिण्यदक्षताद्यक्षामक्षि[5]-तिपगुणग्रामाभिराम !। अनवरतकृतसुकृतशतानुकृत-

अवनौ पृथ्व्यां तत्र वनीपकाः याचकाः।

ऊर्जितः बलवान्।

गीर्व्वाणगणः सुरगणः, धीरगणो वा।

अक्षामः अक्षीणः। गुणग्रामः गुणश्रेणी।

---

१ 'सुराष्ट्र' B.

२ 'वराटकराहाटकर्णाटगौड' B.

३ 'सफलसकलमारंभ (समारम्भ)' B.

४ 'चातुर्यमाधुर्यधैर्यस्थैर्यसौन्दर्य' B.

५ दाक्षिण्यगुणारा(ग्रा)माभिराम' B.

राम!। अमन्दमन्दरान्दोल[1]दोलायमानोद्दामदुग्धाब्धिप्रसूतकमलाविलास[वास?]भवन!। भवनगरनाथ[2] मधुमथनचरणस्मरणपरिणमत्पुण्यजन्यानन्यसामान्यवैभवाधिवास!। सविकाशकाशहरहासव्यासोपन्याससङ्काशवाग्विलासनिवासकालिदास!। धवलधामाधिरूढसमूढशृङ्गारप्रौढप्रमोदप्रमदामदालसविलसन्नयनराजीरा(व!)जीवन![3]। त्रिभुवनजनमनोमनोहरमधुकरसङ्केतकेतकीवन!। जय सभयजनशरण!। जय कमलमसचरण!। जय मदनमदहरण!। जय धरणिभरधरण!। देवं [4]नयनाभिरामं राममिव [5]विलोचन-

दोलायमानः चपलः। वासभवनं वसतिगृहम्।

भवः संसारः एव नगरं तस्य नागरो यो मधुमथनः कृष्णः। परिणतं परिपक्वम्। जन्यं जातम्। अनन्यसमं नान्येन समम्। वैभवं विभुत्वम्।

धवलधाम सौधम्। समूढः सम्प्राप्तः शृङ्गारेण यः प्रौढः महान् प्रमोदः स याभिः तासया। जीवनं जलम्।

सङ्केतः निवासः।

---

१ 'न्दोलदोलादोलायमानोद्दामकमलाविलासवासभवन' B.

२ 'नागर' D. ३ 'राजीवजीवन' B.

४ देवं नयनमुगोभिरामं' B. ५ 'राममिव लोचन' B.

गोचरीकृत्य कृतकृत्याः प्रशान्तखरदूषणोपप्लवा [1]दण्ड-कारण्यमुनय इव समजनिष्महि। अयं हि सम्प्रति संवृत्तो देवस्य साक्षात्कारः। संसारमरुमध्ये समुद्भूत-प्रभूतखेदानां तापत्रयातपतप्यमानामस्माकमकस्माद-जनि सुधाकादम्बिनीकदम्बसम्बन्धः। अनेन नवसुधा-[2]शीकरपरिस्यन्दिनाऽकालजलदेन निर्वापयता [3]सर्व-तस्तापतप्तं शरीरमान्तराणि च करणानि। किं किम-स्मभ्यं नोपकृतम्। कानि [4]कानि च सौख्यानि नोप-नीतानि। काः काः सम्पदो न सम्पादिताः। केषां केषां कल्याणानां न भाजनीकृताः। किमनल्पजल्प-

खरं तीव्रं दूषणं दोषः तज्जातः उपप्लवः उत्पातः। पक्षे खरदूषणौ राक्षसभेदौ।

संसारः एव मरुः निर्जलस्थानम्। प्रभूतः प्रचुरः। तापत्रयं आध्यात्मिकाधिभौतिकाधिदैविकरूपं तदेव आतपः। कादम्बिनी मेघमाला। कदम्बकं समूहः।

निर्वापयता सुखयता।

उपकृतं उपढौकनीकृतम्।

जल्पः आलापः।

१ 'दण्डकावनमुनय' B. २ 'सीकर' B.

३ 'सर्वतः शरीरमान्तराणि' B. ४ 'कानि कानि सौख्यानि' B.

कल्पनयाऽनया। [१]निश्शेषमहोदयोदयानामतिभूमिमध्यास्महे। [२]देवश्च प्रार्थकसार्थं प्रति निधिप्रतिनिधिः। देवं [३]देवेन्द्ररुद्रोपेन्द्रद्रुहिणमुद्राधरं सत्याश्रयं नासत्याः श्रयन्ते। देवेन पवित्रचरित्राणि मित्राणि पुरस्कृतानि। न[४] तिरस्कृतानि। देवाय [५]सेवायत्त(त?)यत्नं

अतिभूमिं काष्ठाम्। अध्यास्महे प्राप्ताः स्मः।

प्रार्थकसार्थं याचकवृन्दम्। प्रति लक्षीकृत्य। निधेः निधिमज्ञातधनस्य। प्रतिनिधिः समः।

द्रुहिणः ब्रह्मा। मुद्राधरं लक्षणधरम्। सत्याश्रयं सत्यलोकाश्रयम्। सत्यायाः सत्यभामायाः आश्रयम्। *सत्यवाक्याश्रयं चेति। †यथाक्रमं द्रुहिणरुद्रोपेन्द्ररूपाणां विशेषणम्। नासत्याः सत्यहीनाः जनाः। अथ च नासत्याः अश्विनीकुमारवंशाः रुद्रादीन् सेवन्ते इत्युचितमेव।

सेवायां आयतः दीर्घः यत्नो यस्य तत्तथा।

१ 'महोदयानामतिभूमि' B. २ 'देवः प्रार्थक' B.

३ देवं रुद्रोपेन्द्रद्रुहिणमुद्राधरं नासत्या[ः]श्रयन्ते' B.

४ 'न तिरस्कृतानि' B. पुस्तके नास्ति।

५ 'सेवापन्नं' B.

* सती दाक्षायणी तस्या आश्रयम्। इति चेत् सम्यक्।

† द्रुहिणोपेन्द्ररुद्ररूपाणामिति पाठे यथाक्रमत्वसम्भवः।

द्वाःस्थदुःस्थीकृतं सामन्तसहस्रमजस्रं स्पृहयति। देवा-
द्देवाधिपादिव यस्याः समस्तावनिभृतो निभृतोपक्रम-
मपाक्रामन्। देवस्य निर्दोषः कोषः पोषयति मनीषि-
मनीषितम्। देवे च प्रसादसुमुखे [१]सम्मुखी धीमुषी।
अपि च। देवस्य महीमहेन्द्रस्यापि सुरसार्थपतेर-
[२]भ्रान्तस्थितेर्बहुनयनलाभरतस्य महाजन्याया लोचन-

अवनिभृतः राजानः, गिरयश्च। निभृतोपक्रमं विरलप्रचारं
यथा स्यात्तथा। अपाक्रामन् पलायिताः।

कोषः भाण्डागारम्। मनीषिणां पण्डितानां मनीषितं
वाञ्छितम्।

धीमुषी बुद्धिः।

मह्यां महेन्द्रः इव महीमहेन्द्रः तस्य। सुराणां सार्थः समूहः।
पक्षे सुरसा शोभना पृथ्वी। अर्थः धनम्। अभ्रान्तः मेघान्तः,
तत्र स्थितिः। अस्य वाहनात्। पक्षे अभ्रान्ता अचपला स्थितिः
मर्यादा अस्येति। बहूनि नयनानि लभते यः तस्य। सहस्राक्ष-
त्वात्। पक्षे बहुभिः नयैः नीतिभिः, नलाभस्य नलाख्यराजसदृ-
शस्य। महाजन्यायाः स्वर्गवेश्यायाः, लोचनमनोहारिणः अपहा-
रकस्य। रूपवैदग्ध्यातिशयादित्यर्थः।

१ 'सुमुखी' B.

२ 'सुरसार्थपराभ्रान्तस्थितेर्बहुनयनलाभस्य' B.

**मनोहारिणः करसम्भृतशतकोटेरमृतभुजः सन्तानमाल-भारिणः कनकाचलरुचेरुच्चामरराजिराजितस्य[१] स्वयम्भूमहितम(त ?)स्थितेः[२] काञ्चनशोभां दधानाः [३]सुधर्मसभासभासदः सुमनसः ।**

'घृताची सहजन्या च रम्भा च मेनका परा ।' इति ॥

अथवा सह एकदा जन्यानां प्राणिनां यः श्रयः शुभावहं कर्म तस्य यत् आलोचनं सम्यक् ज्ञानं तेन मनोहारिणः । पक्षे सहजं स्वाभाविकं यत् न्यायालोचनं न्यायशास्त्रागमः तेन मनोहारिणः । शतकोटिः वज्रम् । शतकोटिसङ्ख्यातं धनं च । अमृतं सुधां भुनक्तीति । पक्षे अमृतं यज्ञावशिष्टं अयाचितधनं वा । तथा च 'अमृतं स्यादयाचितम् ।' भुनक्तीति । सन्तानमालभारिणः सुरतरु-कुसुममालां दधानस्य । 'मालभारिणः' इति 'इष्टकेषी—' ६ । ३ । ६५ इति ह्रस्वः । पक्षे ज्ञातिसमूहपोषकस्य । कनकवत् अचला रुचिरस्य । पक्षे कनकाचले सुमेरौ रुचिः दृप्तिरस्येति । उच्चाः ये अमराः देवाः तेषां राजिः समूहः । पक्षे उद्धतचामर-श्रेणी । स्वयं आत्मना भुवि महिता स्थितिर्यस्य । पक्षे स्वयम्भुवा ब्रह्मणा विष्णुना वा महिता स्थितिः स्थानं मर्य्यादा वा यस्य । अथवा स्वयं आत्मना भूत्वा बाहुल्येन हिता धृता कुशला वा स्थितिरस्येति । काञ्चन अनिर्व्वचनीयां शोभां, स्वर्णशोभां च ।

---

१ 'रुच्चामरराजितस्य' B.

२ 'सहितस्थिते' B., 'महितस्थितेः' A. ३ 'सुधर्मा' B.

[1]काव्यमनोज्ञं सुचरितं सभा प्रवरः। प्रणयिनः सुखलीना गन्धर्वाः। गुरुर्गुरुः। मरुत्ततिरम्भासम्भावितं [2]सदानन्दनमुद्यानम्। [3]अहो वैचित्र्यमत्र। जनपदाः सदानयज्ञा [4]अनीतयः। उपचितबहुश्रीहयो-

सुधर्म्मा नाम्नी देवसभा। पक्षे शोभनः धर्म्मः यस्येति। सुसभाः पण्डिताः, देवाश्च।

काव्यस्य शुक्रस्य मनो जानातीति काव्यमनोज्ञम्। पक्षे काव्येन कवितया मनोज्ञं शोभनम्। प्रवरः श्रेष्ठः। प्रवरनामा च।

प्रणयिनः, प्रणयः प्रेम तद्युक्ताः। तथा च—

'प्रणयः प्रश्रये प्रेम्णि याञ्चाविस्रम्भयोरपि।'

सुखलीनाः सुखेन लीनाः। खलीनाश्च। गन्धर्व्वाः घोटकाः, देवयोनयश्च।

गुरुः आचार्य्यः।

मरुतौ पवनामरौ। रम्भा कदली, अप्सरोभेदश्च। सदा सर्व्वदा नन्दनं नन्दनमाख्यकम्। पक्षे आनन्दनं आनन्दकरम्।

विरोधे सदा नयं जानन्तीति सदानयज्ञाः ये ते कथमनीतयः नीतिहीनाः। अथ च अविरोधे दानयज्ञाभ्यां सहिताः, ईतिहीनाश्च।

१ 'काव्यश्रमंनोज्ञं चरितं' B. २ 'सदानन्दमुद्यानम्' B.
३ 'अति वैचित्र्यमत्र' B. ४ अती(नी)तयः' B.

ऽविग्रहाः । समहाधन्वानो बहुधान्योदयोल्लासिनः[१] । बहुखलाः सज्जनालङ्कृताः । [२]सज्जनसन्निधाना वैदूर्यभाजः । नितान्तप्रणता उन्नतास्तः । कुलीनाः सदानभोगाः । मन्त्रिणः सदाचाराः । मातङ्गाः स्पृहणीय-

'अतिवृष्टिरनावृष्टिः शलभा मूषकाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः ॥'

एवं परत्रापि विरोधाभासाः ज्ञेयाः।

बहुव्रीहिः समासभेदः । बहवः व्रीहयः धान्यादयश्च । अविग्रहाः विग्रहसमासान्तेन हीनाः । कलहहीनाश्च ।

महान्तः धन्वानः मरुस्थानानि येषु । पक्षे महाधानुष्काः । बहूनां धान्यानां उदयेन उल्लासिनः । बहुधा अन्येषां उदयेन उल्लासिनश्च ।

बहुखलाः बहवः खलाः यत्र । खलः क्रूरः । धान्यमर्द्दनस्थानं च ।

सन्निधानं सान्निध्यम्, प्रशस्तधनं च ।

कुलीनाः कौ पृथिव्यां लीनाः । कौलिन्यवन्तश्च । सदा नभसि गच्छन्तीति सदा नभोगाः । दानभोगाभ्यां सहिताश्च ।

सदाचाराः सर्व्वदा चाराः दूतभेदाः । प्रशस्ताचाराश्च ।

मातङ्गाः चण्डालाः, हस्तिनश्च । स्पृहणीयं दानं येषां ते तथा । पक्षे मनोज्ञमदजलाः ।

---

१ 'धान्योदयोल्लासिताः' B.
२ लक्ष्मसन्निधाना' A. B.

दानाः। [1]भुजगवलया दक्षमखभुजः। भूतिभृतो रजोरहिताः। सुकेशा निष्केशाः[2]। परिजनः कलानिधिर्न दोषाकरः। दानं समानमसमानम्[3]।

किञ्च किञ्चन वचनमुच्यमानमधुना मधुना समानं मधुनाशनावतारः क्षणमवधारयतु मनसि धारयतु च।

भुजगाः वलयानि कङ्कणं येषां शिवानां ते तथा। पक्षे भुजप्राप्तवलयाः। दक्षस्य प्रजापतेः मखं यज्ञं दूषयन्ति ये ते तथा। पक्षे दक्षाश्च ते मखभुजश्चेति।

भूतिः भस्मनि सम्पदि। रजः गुणभेदः, धूलिश्च।

निष्केशाः केशरहिताः। निष्काणां धनानां ईशाः।

कलानिधिः चन्द्रः, कलायुक्तश्च। दोषाकरः, दोषाणां आकरश्च।

समानं सदृशं, मानसहितं च। असमानं असदृशं, अपरिमाणसहितं च।

अधुना इदानीम्। मधुना माध्वीकेन। मधुनाशनः, तस्यैव अवतारो यस्य स तथा। अवधारयतु विचारयतु निश्चिनोतु इति यावत्।

१ 'भुजङ्गवनिता दक्षमखपुषो भू' B. २ 'निःक्लेशाः' B.
३ 'दानं सदानमसमानम्' B.

10

तथा चामी चामीकराचलवदचलाः कलाकलाप-मण्डिताः[१] पण्डिताः खण्डिताखिलविपक्षपक्षाः क्षाम्यन्तु नाम मामकं चापलं विचारयन्तु च मया निरुच्य-मानमुचितमनुचितं वा। यद्वैते सदसद्विचारचातुरी-[२]चतुराश्चतुराननाइव [३]शिवप्रसादादासादितमहित-महिमानो मानोन्नता[४] नतान्तेवासिवासनोचित-व्याख्याः। सङ्ख्यावद्गणनायां पाणिनीया इव गणनीयाः।

चामीकराचलः मेरुः तद्वत् अचलाः। चापलं चापल्यम्।

मानेन उन्नताः। अथ च आनताः नम्राः ये अन्तेवासिनः शिष्याः तेषां वासना अभिप्रायः तदुचितव्याख्याः।

सङ्ख्यावन्तः पण्डिताः तेषां गणनायां पाणिनीयाः पाणिनि-मुनिशिष्याः।

१ 'मण्डिताः। खण्डिताः। खण्डिताखिल' B.

२ 'चतुराननाश्चतुरानना इव' B.

३ 'प्रसादासादित' B.

४ 'महिमानोऽनम्रा नतान्तेवासि' B.

सकलदिक्कलशस्तनीस्तनकपोलस्थलमलयजमण्डलाय-मानयशःप्रसराः। दुर्व्यपोहमोहमहान्धकारप्राग्भार-संहारभास्कराः। कलिकलुषकालकूटकवलनकलाक-लितनीलकण्ठावताराः। अमन्दमन्दरगिरिपरिक्षुभित[1]-[2]क्षीराब्धिमध्योल्लसत्कल्लोलविमलसूक्तिमुक्ताफलकला[3]-पालङ्कृतकण्ठनालाः। अनेककलाविलासोपहसितमि-तकलकलानिधयः[4]। निरवद्यविद्यानद्यास्रयपयोराशयः।

कलशस्तनी अङ्गना। मलयजः चन्दनः। तन्मण्डलवत् आचरेत्।

दुर्व्यपोहः दुःखेन निरसनीयः। प्राग्भारः समूहः।

कालकूटं विषं तस्य कवलनकला ग्रासलीला। नीलकण्ठः शिवः।

सूक्तयः शोभनाः उक्तयः एव मुक्ताफलकलापः हारः।

मितकलः परिमितकलाकः। कलानिधिः चन्द्रः।

निरवद्यं अनाविलम्।

१ 'व्यभ्यत्क्षीराब्धि' B. २ 'मध्योल्लसत्कल्लोल' B.

३ 'सूक्तमुक्ताकलापा' B.

४ 'हसितमिति कलकलानिधयः' A. C., 'हसितामितकलानि-धयः' B.

संसारसारसारस्वत[१]स्वतःप्रकाशभासमानासमानवाग्ब्रह्माणो[१] ब्राह्मणाश्चतुरुदधिमेखलाखेलदुच्छृङ्खलकीर्तिनर्तकीकाः। सकलकलाविलासभाजनभाजः[३] सभाजना भ्राजन्ते।

इति तृतीयस्तबके राजदर्शनं नाम प्रथमं कुसुमम्। १॥

---

सारस्वतः वाङ्मयः। समाना मानसहिता। वागेव ब्रह्म(ह्म) वेदः। प्रमाणत्वात्। ब्राह्मणः (णाः) तत्त्व [ज्ञाः?]। चतुरुदधयः मेखला यस्येति सकला पृथ्वीत्यर्थः। उच्छृङ्खलं उद्धतम्।

सकलकलाविलासभाजनानां जनानां अपि। सभाजनभाजः पूजाभाजः। 'सभाजृ याचनपूजनयोः।' सभाजनाः सदस्याः।

इति तृतीये प्रथमं कुसुमम्। १॥

---

१ 'स्वरविकाशभासमाना' B. २ 'वाग्ब्रह्माश्चतुरुदधि' B.
३ 'विलासभाजनसभाजनसभाजनभाज इव भ्राजन्ते' B.

देवस्योपासनावासनाशंसनाहृष्टाः सत्वरा गत्वरा अपि वयं प्रलम्बविलम्बभाजो यदभूम भूमहेन्द्रस्तत्र हेतुमाकलयतु[1] । अक्षामद्राक्षामण्डपमण्डितस्य पचेलिमफलास्वादमोदमानजानपदस्य [2]विकसदमलकुसुमसमूहसौरभ्यलुभ्यदलिकुलकलितललितक्रीडस्याक्रीडस्य मध्ये चलदलतमालतलशिलातलकलितनिष्कद्म[3]-पद्मासनम् । अनिश्वासनासाग्रन्यस्तचक्षुर्विभागम् ।

देवस्य उपासना उपसेवनाऽभिप्रायेण या आशंसना आशीर्वादस्तुतिः तया हृष्टाः । सत्वराः ससम्भ्रमाः । गत्वराः गमनशीलाः । प्रलम्बं विलम्बः अति कालक्षेपः ।

अक्षामः अक्षीणः । द्राक्षा मृद्वीका लताभेदः । पचेलिमं स्वयं पक्कम् । सौरभ्यं सुगन्धिता । लुभ्यन्तः लोभवन्तः । ललितक्रीडस्य आक्रीडोद्यानस्य । चलदलः अश्वत्थतरुः । निष्कद्म निष्कपटम् । पद्मासनं पद्माख्यं आसनम् । तथा चोक्तम्—

'वामोरूपरि दक्षिणं हि चरणं संस्थाप्य वामं तथा
दक्षोरूपरि तस्य बन्धनविधिं कृत्वा कराभ्यां दृढम् ।
तत्पृष्ठे हृदये निधाय चिबुकं नासाग्रमालोकये-
देतद्व्याधिविकारनाशनकरं पद्मासनं प्रोच्यते ॥'

अनिश्वासः निश्वासहीनः ।

१ 'हेतुमाकर्णयतु' B. २ 'विकसदसम' B.
३ 'निष्कद्मपद्मासनं । निश्वासनिःश्वनासाग्र' D.

[1]निःस्यन्दमानमदोदबिन्दुपानपीनचकोरचयरचितप-[2]रिचयकाषायसिचयम्। [3]रागादि( रि? )दारिज्ञाना-सिचयम्। निखिलोपनिषन्निषण्णमानसम्[4]। परमहंस-संसदवतंसम्। [5]दुरतिक्रमदुरिताक्रमव्याधिबाध्यमान-जगदगदङ्कारम्। निर्विकारम्[6]। संश्लिष्टमष्टसिद्धिभिः।

*निस्पन्दः निश्चलः। निस्यन्दमानः संस्रवमयः। सम्मदोदबिन्दुः आनन्दजनितबाष्पजलबिन्दुः, तस्य पानेन पीनः दृढाङ्गः। काषायं कषायेण रक्तम्। सिचयं वस्त्रम्।

रागः एव अरयः तेषां दारो दारणशीलः ज्ञानमेव असिचयः खड्गसमूहो यस्य तं तथा। उपनिषत् [अ?] द्वैतवादिवेदकाण्डः। निषण्णं आसक्तम्।

परमहंसाः तत्त्वज्ञानिनः तेषां संसत् गोष्ठी तदवतंसं तन्मण्डनम्।

दुरतिक्रमं दुर्निरस्यं यत् दुरितं पापं तन्मध्ये आक्रमः आक्रान्तिः पीडा स एव व्याधिः तेन बाध्यमानं यत् जगत् तस्य अगदङ्कारं वैद्यम्।

अष्टसिद्धिभिः अणिमादिभिः।

१ 'निस्पन्दमानसम्मदोदबिन्दु' A. २ 'चयचरितपरिचयम्' B.

३ 'रागारिदारि' A. ४ 'मनसम्' B.

५ 'दुरितोद्दामव्याधि' B.

६ 'निर्विकर्म्म। संश्लिष्टमिष्टसिद्धिभिः' B.

* मूलग्रन्थे 'निस्पन्द' इति शब्दो न दृश्यते।

अमत्रं मन्त्राणाम्। मित्रं मैत्र्याः। शरणं करुणायाः। मन्दिरं मुदितायाः। सपक्षमुपेक्षायाः। क्षेत्रं क्षमायाः। कोषं सन्तोषस्य। शैलं [1]शीलसलिलस्य। [2]सत्पात्रं पविचि(त्र)तायाः। सौधं शुद्धबुद्धेः[3]। आधारं धीरतायाः। गुरुं गुरुतायाः। प्रासादं प्रमादस्य। निदानं चिदानन्दसम्पदः[4]। आश्रयं श्रेयसः। तपसोऽप्युपासनीयम्। परमस्य[5] शमस्यापि सम्यगनुगम्यम्। योगस्याप्यनुयोगयोग्यम्। श्रद्धाया अपि श्रद्धेयम्। [6]अस्पृष्टं दुष्टतया। अन[व]गूढं मूढतया। निरस्तं

अमत्रं पात्रम्।

मैत्री सौहार्द्दम्।

मुदा मदा अनिन्दि(आनन्द?)ता।

उपेक्षा सर्व्वत्र मौदास्यम्।

क्षमा तितिक्षा।

सन्तोषः दुःखादनुद्वेगः।

शौलं महत्त्वम्।

चिदानन्दसम्पदां ब्रह्मानन्दातिरेकाणाम्।

---

१ 'शीलशालस्य' B. २ 'पात्रं पवित्रतायाः' B.

३ 'शुद्धेः। आधानं' B. ४ 'सम्पदाम्' B.

५ 'परमस्य' B. पुस्तके नास्ति.

६ 'स्पष्ट(अस्पृष्ट)मदिष्टतया' B.

नास्तिकतया। वञ्चितं कुचिन्तया[1]। दूरीकृतं दुरितैः। अगृहीतं प्रतिग्रहैः[2]। अवज्ञातमज्ञानेन। अनङ्गीकृतमनङ्गेन। क्षिप्तं हृष्टतया। उत्सारितं मात्सर्येण। [3]असेवितं विषयैः। अलब्धं लुब्धतया। वर्जितमनार्जवेन। अशीलितं दुःशीलतया। [4]निर्वासितं दुर्वासनाभिः अकलितं कलिना। महिलामहिलाला[5]मिव परिहरन्तम्। महामन्त्रिणां पा(प?)वनाभ्याससुघटित-

नास्तिकः वेदाप्रामाण्यवादी।

उत्सारितं दूरीकृतम्।

विषयेण इन्द्रियसुखेन।

अनार्जवेन कौटिल्येन।

अशीलितं अभ्यासितम्। दुःशीलता दुःस्वभावता दुश्चरित्रता तया। तथा च—

'शीलं स्वभावे सद्वृत्ते।' इत्यमरः।

महिलां श्रियम्। अहिलाला सर्पमुखोत्क्षिप्तक्लेदः।

पा(प?)वनाभ्यासः प्राणायामः, तेन सुघटिताः सन्धयः यत्र एवंभूतं विग्रहं शरीरं यस्य।

---

१ 'कुपठतया' B.  २ 'प्रतिग्रहैश्च' B.
३ 'अनिषेवितं' B.  ४ 'दुर्वासितं' B.
५ 'महिलाभा(ला)मिव' B.

सन्धिविग्रहम्। कामनया वर्जितमपि न कामनया-वर्जितम्। निष्कोपचयमप्यनिष्कोपचयम्। अस्फुटमहसमप्यस्फुटमहसम्[1]। [2]न तापकारिणमप्यनतापकारिणम्। गिरावनप्रियं गिरावनप्रियम्। [3]पुरुषमपु(प)रुषमद्राक्ष। [4]लक्ष्मभिरभिनववैरभवैरसमानं भासमानम्।

विरोधाभासमाह। कामनयेति। कामनया वाञ्छया। अवि-रोधे न कामनये कामशास्त्रे आवर्ज्जितं आसक्तम्।

निष्कोपचयं निर्गतकोपचयम्। अनिष्कोपचयं न विद्यते निष्कस्य धनस्य उपचयः सञ्चयः यस्येति तम्।

[अ?]स्फुटम्। अहसं हासहीनम्।

नताः अपकारिणः यस्मात् तम्। न तापकारिणं न सन्तापकारकं च।

गिरि(रा?)वाच्याम्(च्या?)। वनप्रियं कोकिलमिव। गिरौ पर्व्वते। अवनप्रियं नाप्रीतिधरं च।

पुरुषमपरुषं अपगतक्रोधम्।

लक्ष्मभिः लक्षणैः। असमानं न विद्यते समानः यस्य तम्।

---

१ 'स्फुटमहसं संस्फुटमहसम्' B.

२ 'न तापकारिणं नतापकारिणम्' B.

३ 'पुरुषमपरुषमपरुषमद्राक्षं' B.

४ 'लक्ष्मिभिरभिमतैरसमानं' B.

[1]अथाभ्युत्थानवेलालीलायितानन्तरं बद्धाञ्जलिर्निरवद्यां [2]गद्यपद्यमयीमयमुदाजहार भारतीम्।

यथाः—

जन्हुजे मम शशिप्रभासिते
भासितेशमुकुटे सदानवे।
दानवेन्द्ररिपुपाद निर्गते
निर्गतेर्भव भवाब्धिपारदा॥

पारदावदातवीचिनिचयक्षालितास्तोकलोकमले। [3]कमलेशयकमण्डलुमण्डला(ना?)यमानपानीयधाराव-

अभ्युत्थानवेला परमेश्वरोपस्थानकालः, तत्र लीलायितं प्रदक्षिणादिव्यापारः। उदाजहार उवाच।

हे शशिप्रभासिते! चन्द्रकान्तिवत् शुक्ले! हे सदा नवे! नूतने! अथवा सद्भिः आ नूयते स्तूयते या सा सदानवा। निर्गतेः गतिहीनस्य।

पारदः रसः तद्वत् अवदातो विशदः। अस्तोकं अनल्पं। लोकमलं लोकानां पापम्।

कमलेशयः ब्रह्मा। मण्डला(ना?)यमानं भूषावदाचरत्। अवधूता जिता नवसुधा यया सा तथा।

१ 'अथ वृकपातवेलालीलामि(यि)तानन्तरं' B.

२ 'निरवद्यगद्य' B. ३ 'कमण्डलुतायमानपानीय' B.

धूतनवसुधे। 'वसुधेश्वरभगीरथपथवर्तमानजलकल्लोल-मिलड्डिण्डीरपिण्डविडम्बितहरमनोरमतमहासे[२]। महासेनजननि। जननिकरनरकहारिवारिपूरपूरितत्रि-भुवनभवने। [३]भवनेत्रानलकीलकवलितबालेन्दुपालनो-चितपयःप्रदानकुशले। कुशलेखाङ्कितसमीपावने। पाव-नेन्दिन्दिरमन्दिरारविन्दसुन्दरमेदुरापे। दुरापेश्वरशिर-

वसुधेश्वरेति। विडम्बितः सदृशीकृतः हरस्य मनोरमः हासः ययेति सा तथा।

महासेनः कार्त्तिकेयः तस्य हे जननि! मातः!। तस्य षाण्मा-तुरतया गङ्गा माता।

जनानां निकरः समूहः। त्रिभुवनमेव भवनम्।

भवस्य शिवस्य नेत्रानलकीला नयनाग्निज्वाला तया कवलितः ग्रस्तः।

कुशानां लेखया श्रेण्या अङ्किता पूजिता समीपावनिः निकट-भूमिः अस्याः सा तथा

पावनं पवित्रम्। इन्दिन्दिरः भ्रमरः तस्य मन्दिरं आश्रयः यत् अरविन्दं पद्मं तेन मेदुराः स्निग्धाः आपः अस्याः इति। अच् समासान्तः। ततः कर्मधारयः।

दुरापं दुर्लभम्। परमगौरवः अत्यन्तादरः।

१ 'पथप्रवर्तमान' B. २ 'मनोरमहासे' B

३ 'नेत्राम(न)लकील' A., 'नेत्रानलकीला' B.

सञ्चारसञ्जातपरमगौरवे। [१]गौरवेशविशेषप्रभाविनि-
न्दितशारदजलदे[२]। जलदेवतावगाहनक्षुभितसितच्छ-
दनिवहभासमाने। समानेकप्रदेशसञ्चारिहरिणप्रा-
रब्धकेलिसङ्गरे। [३]सङ्गरेचिततटनिषसमुनिजनाकर्ण्य-
मानमनोरमारवे। मारवेदनानभिज्ञवैखानसावचित-
सारसवने। सवनेज्यमानादिपुरुषवक्षःस्थलस्थायिकौ[४]-

गौरवेशः शुक्लवंशः। शारदः शरत्कालीनः।

जलदेवता वरुणलोकः। सितच्छदं पद्मम्। निवहः समूहः।
भासमाने शोभमाने।

समः अनिम्नोन्नतः यः अनेकप्रदेशः तत्र सञ्चारी भ्रमणशीलः।
केलिसङ्गरः केलियुद्धम्।

सङ्गरेचितः सङ्गवर्जितः। मनोरमः आरवः शब्दः।

मारवेदना कामजनितपीडा तदनभिज्ञः यः वैखानसः वान-
प्रस्थः तैः (तेन?) अवचितं गृहीतं सारसवनं पद्मवनं यस्याः
सा तथा।

सवनं यज्ञः तत्र इज्यमानः पूज्यमानः यः आदिपुरुषः
श्रीकृष्णः। प्रभासमूहवत् सिते शुक्ले।

१ 'गौरवेषविशेष' B. २ 'शारदविमलजलदे' B.
३ 'निष्पन्न(सन्न?)' B. ४ 'शायि' B.

स्तुभप्रभासमूहसिते । हसितेश्वरशिरोवर्त्तिशीतद्युति-केतकीकलिके । कलिकेलिभवनभवनगरदाहोद्धुरधर्मा-नलप्रभवारणे । वारणेन्द्रावगाह्यमानघनरसे । नर-[1]शेमुषीसमुदयागोचरहरमौलिमालतीमालाभ्रमकरे । मकरेश्वरपृष्ठाधिष्ठायिचरणकिसलये[2] । सलयेन्द्रादि-वृन्दारकवृन्दविधीयमाननये । नयज्ञेश्वरभार्गवाङ्गिरस-

हसितः उपहसितः सदृशीकृतः इति यावत् । शीतद्युतिरेव केतकीकलिका इति रूपकम् ।

कलेः कलिनाम्नो युगस्य यत् केलिभवनं विलासमन्दिरं भवः एव नगरं तस्य दाहे उद्धुरः समर्थः धर्म्मः एव अनलः वह्निः तस्य प्रभवः उत्पत्तिस्थानं एवंभूता अरणिः दारुभेदः ।

वारणेन्द्रः ऐरावणः । घनं निविडं यत् रसम् ।

नराणां शेमुषी तस्याः समुदयः । भ्रमकरः भ्रान्तिजनकः । पत्राद्यच् ।

मकरेश्वरः मकरश्रेष्ठः । चरणकिसलयः अङ्घ्रिपल्लवः ।

सलयः सविनाशः । वृन्दारकाः देवाः । विधीयमानयज्ञे ।

नयज्ञाः नीतिविदः । भार्गवः शुक्रः । आङ्गिरसः बृहस्पतिः । वाङ्मनसेति 'अचतुर—' ५ । ४ । ७७ इत्यच निपातितम् । प्रभावः महत्त्वम् ।

१ 'सेमुखी (शेमुषी)' B.

२ 'प्रस्थापितचरणकिशलये' B.

वाङ्मनसागोचरप्रभावे । [1]प्रभावेश्मामृतरश्मिमण्डला-
प्लावनसुरसे[2] । सुरसेव्यमानसैकतसन्निधाने । निधा-
नेश्वरशैलशिरोविहितरङ्गे । तरङ्गेरितनीरजोदरकुञ्ज-
गुञ्जद्भ्रमरे । [3]भ्रमरेणुहरणप्रवीणाम्भःसम्भारसम्भा-
विते । भावितेश्वरप्रलम्बजटाकलापे । कलापे-
शलस्वर्वासिविलासिनीजनघनजघनावरुद्धमुग्धप्रवाहा-

प्रभावेश्म रोचिषां स्थानं यत् अमृतरश्मिमण्डलं तदाप्लावने
सेचने सु शोभनः रसः जलं यस्याः सा तथा ।

सुरैः सेव्यमानं सैकतं सिकतामयः देशः तस्य सन्निधानं
निकटो यस्याः ।

निधानेश्वरशैलः कैलासः तस्य शिरसि शृङ्गे विहितः रङ्गः
खेलनं यया सा तथा ।

तरङ्गैः ईरितः प्रेरितः ।

भ्रमरेणुः भ्रान्तिज्ञानमेव रेणुः धूलिः ।

भावितः प्राप्तः । प्रलम्बः लम्बमानः । कलापः समूहः ।

कलापेशलः कलाकुशलः । स्वर्वासी देवः । (अभ्रः शोभनः)
त्रिविष्टपविटपी कल्पवृक्षः ।

१ 'वेश्मामितरश्मि' B. २ 'सरसे । सरसेव्यमान' B.
३ 'प्रवीणार्थःसम्भार' B.

स्पष्टचिविष्टपविटपिप्रसूनधवलिते। बलितेजोहारिहरिवामपादप्रहारभिदुरब्रह्माण्डमण्डपमध्यराजत्[1]-कस्तम्भायमानमहाप्रवाहशोभितजगद्वीक्षिते। दीक्षितेप्सितलोकप्रदानपटुतटनिविष्टमन्तुष्टनैष्ठिकगोष्ठीस्त[2]-वाविर्भावितवासवे। [3]वासवेतसनिकुञ्जनिषण्णकिन्नरमिथुनोपगीयमाने। [4]यमानेकमदविनाशनोद्धुरतरवा-

बले: असुरराजस्य तेजोहारी यः हरिः। भिदुरः स्वयं दीर्य्यमाणः। राजतः रजतसम्बन्धी यः एकस्तम्भः तद्वत् आचरन। जगद्वीक्षिते जगद्भिः वीक्षिते दृष्टे।

दीक्षितानां यज्ञप्रारब्दीक्षाणां ईप्सितलोकः स्वर्गादि तस्य प्रदानं तत्र पटुः। वासवविशेषणम्। नैष्ठिकः निष्ठावान् मुनिजना-दिरित्यर्थः। वासवः इन्द्रः।

वासः वसतिरूपः यः वेतसनिकुञ्जः वेतसलतागृहम्। उपगीयमाने स्तूयमाने।

यमस्य अधिकमदः गर्व्वः। वारिधारां धारयतीति धारिणी अम्भः। (?) ततः पवाहच्।

---

१ ‘राजमार्गैकस्तम्भसमानमह्हा’ B. २ ‘नैष्ठिकस्तवाविर्भूत’ B.

३ ‘वासवेदीवसन्निकुञ्ज’ B. ४ ‘यमानेकपमद’ B.

रिधाराधारे[1] । राधारेवतीपतिसमाराधितकलिन्द-कन्यापरिरम्भणावाप्तहरिहरकाययशोभे । यशोभेशप्रकाशनाशितदुरितान्धकारविसरे । बिसरेखायमानहरशिरश्चन्द्रचुम्बनपटुचटुलचक्रवाकचक्रवालवाचाल[2]-जलव्यतिकरोद्भूतसगरपार्थिवकुले । बकुलेन्द्रद्रुमादिद्रुमच्छायानिषण्णकुरङ्गकुलकवलीक्रियमाणतीरकलमे । 'कलमेखलानिनादानुवादिराजहंसरसितोल्लसितवि[4]-

राधारेवतीपती कृष्णबलभद्रौ । कलिन्दकन्या यमुना तस्याः परिरम्भणं आलिङ्गनम् ।

यशो यशः । भेशः चन्द्रः । दुरितमेव अन्धकारविसरः तमःपटलः ।

बिसरेखायमाणः मृणाललतेव आचरन् । चटुलः चपलः । चक्रवालः समूहः । व्यतिकरः सम्पर्कः । सगरनाम्नः पार्थिवस्य राज्ञः । कुलं वंशः ।

इन्द्रद्रुमः वृक्षभेदः । कुरङ्गकुलं हरिणवृन्दं तेन कवलीक्रियमाणः ग्रस्यमानः । कलमः धान्यभेदः ।

कलः अव्यक्तमधुरः । मेखला काञ्ची तस्याः निनादानुवादौ शब्दानुकारौ । रसितं शब्दः । विपुलं महत् । पुलिनमेव जघनः यस्याः इति । 'शेषात् विभाषा' ५ । ४ । १५४ इति कप् ।

१ 'वारिधाराध(धा)रे' B.  २ 'चक्रवाके । चक्रवाल' B.

३ 'मेखलानुनादानुवादि' A. C., 'मेखलानिनादानुवादि' B.

४ 'रसितोल्लासित' B.

पुलपुलिनजघनके। घनकेतकीवनपवनान्दोलितनीलोत्पलकुन्तले। कुन्तलेलिहानभीषणसमरार्णवसन्तरणप्रवीणदेवव्रतनिपीतकुचकलशे। कलशैवालमञ्जरीग्रासलालसतिमिनिकरविराजमानप्रवाहभूषितमदनदहनमस्ते[१]।

नमस्ते महोर्मीजिताहीनभोगे
नभोगेयकीर्त्ते नमद्विप्रसिद्धे।
प्रसिद्धेऽस्तु गङ्गे मुदे तेऽम्बुधारा[२]
बुधाराधिते दत्तसन्तानभोगे॥ १॥

घनं निबिडम्। नीलोत्पलान्येव कुन्तलाः।

कुन्ताः एव लेलिहानाः सर्प्पाः। देवव्रतः भीष्मः।

कलं शोभनं शैवालम्। तिमिः जलजन्तुभेदः। मदनदहनः शिवः। मस्तं मस्तकम्।

अहीनः शेषनागः तस्य भोगः देहः। नभसि गेया कीर्त्तिरस्येति। नमन्तः विप्राः सिद्धाश्च यत्र। मुदे हर्षाय ते तव अम्बुधारा अस्तु। हे बुधाराधिते! पण्डिताराध्ये!। दत्तः सन्तानः वंशः भोगः सुखं च यया॥

१ 'मस्तके नमस्ते नमस्ते'। २ 'गेन्दुधारे' B.

नभोगे [1]खलाशीविषातङ्कवीशः
कवीशस्तवेमं स्तवं व्याततान ॥
ततानन्तकीर्तिः कलाभाजनानां
जनानां शिरोदाम देवेश्वरोपि ॥ २ ॥
इत्यभिधाय विरराम ॥

इति तृतीय[2]स्तबके गङ्गास्तुतिर्नाम द्वितीयं कुसुमम् ॥ २ ॥

---

नभसि गच्छतीति हे नभोगे ! खलाः एव आशीविषाः सर्पाः तेभ्यः यः आतङ्कः भयं तत्र वीशः गरुडः । कवीशः कवीश्वरः । व्याततान विस्तारयामास ।

तता विस्तृता अनन्ता कीर्त्तिरस्येति । कलाभाजनानां कलापात्राणां शिरोदाम श्रेष्ठः इत्यर्थः । देवेश्वरः इन्द्रः । अथ च देवेश्वरनामा कविः ।

इति तृतीये द्वितीयं कुसुमम् ॥ २ ॥

---

१ 'खलाशीविषातङ्कनिःशङ्कवीशः' A. C.
२ 'तृतीयकयास्तबके' B.

अथ विहितस्तवस्य भूसंज्ञया पुरुहूताज्ञयैवाहूताः सविनयमुचितोपचितामेतां वाचमवोचाम ॥ नमः [1]कमलाकामुकानुकारावतरणेभ्यः श्रीचरणेभ्यः। सम्प्रति प्रसादप्रासादतः [2]संसारगु(म?)रुमरीचिकावीचिका-मृषातृषापगमभाजः [3]सुधासागरमध्यमध्यगमाम। एतर्हि बर्हिवाहनः कृतात्मसंवाहनः[4] ज्ञानदर्पणः

भूसंज्ञया भ्रूसूचनया। पुरुहूताज्ञया इव आहूताः इन्द्राज्ञयेव आकारिताः। उचितोपचितां उचिता योग्या उपचिता प्रमेय-बहुला। उपचितोपचितेति पाठे उपचिता पूजिता।

कमलाकामुकः कृष्णः तदवतारस्वरूपेभ्यः।

प्रसादः प्रसन्नता तस्य प्रासादः गृहम्। मरुः निर्जलस्थानम्। मरीचिकावीचिका मृगतृष्णा। मृषा वृथा। तृषा पिपासा तस्याः अपगमः क्षयः। अगाधमध्यं अतलस्पर्शाम्भः। अगमाम प्राप्ताः स्म।

सत्सङ्गादत्यन्तसुखावाप्तौ हृद्गमस्वादमाह। एतर्हीत्यादि। एतर्हि एतादृशि काले। बर्हिवाहनः कार्त्तिकेयः। कृतं आत्मनः संवाहनं शुश्रूषा येन स तथा। ज्ञानमेव दर्पणः अनुप्रकाशः

---

१ ‘कामुकावतरणेभ्यः’ B. २ ‘गुरुमरुमरीचिका’ B.

३ ‘सा(सौ?)धसागरमगाधमध्य’ B.

४ ‘कृतात्मसंवाहनः’ B., ‘कृतात्मसंवाहनाख्यान’ A. C.

कृतनिजार्पणः सद्यो याज्ञवल्क्यवाक्यमाशिश्रिये[1] निःश्रेयसश्रेयसे। अधुना धुनाना पापानि सुरधुनी[2]-ध्वनीनतामयासीत्। अतोऽस्माकं[3]न भविता भविता। [4]भगवन्भवन्मुखसुखावलोकनादुत्सारितातुच्छकच्छो-च्छ्रायनिकायस्य कायस्य फलमविकलमवापाम। भवानेको [5]भवानेकोपपातकव्रातकलभकुलनिराकुल-

यस्य। कृतं निजस्य आत्मनः अर्पणं अर्थात् गुरौ याज्ञवल्क्ये येन स तथा। आशिश्रिये आश्रितवान्। निःश्रेयसश्रिये मोक्षात्मकानन्दसम्पदे। मत्सङ्गादत्यन्तदुःखध्वंसेन परमानन्दाधिगमो भवतीति यदा ज्ञातवान् तदैव याज्ञवल्क्यादोष्यात्मवचनं (?) जग्राह इत्यर्थः।

विनयपुरःसरमाह। अधुनेति। धुनाना कम्पयन्ती सुरधुनी गङ्गा। अध्वनीनतां पान्थभावम्।

भविता संसारित्वम्। न भविता न भविष्यति।

उत्सारित दूरीकृतः। अतुच्छः महान्। कच्छोच्छ्रायनिकायः दुःखोद्रेकसमूहः यस्य स तथा। अवापाम प्राप्ताः स्म।

एकः श्रेष्ठः। भवान् एकः त्वमेकः। भवस्य संसारस्य अनेकं बहुलम्। उपपातकं गोवधादि। व्रातः समूहः। कलभः

---

१ 'वाक्यैक्यमाश्रिश्रिये निःश्रेयसश्रिये' B.
२ 'सुरधुनीहाध्व' B.
३ 'भविता भविता' B.
४ 'सुखावलोकनादनुत्कच्छातिकच्छोच्छ्रायनिकायस्य फल' B.
५ 'व्रातकलभकुलकवलनकठोर' B.

कवलनकठोरकण्ठीरवः। भवदागमनप्रसङ्गो[1] गङ्गाप्रवाह इवाच प्रायेण प्रावर्त्तत। युष्मद्विजयव्याजेन राजीवजन्मा[2] सन्मार्गोपदेशायास्मै समाजिहीते स्म। उन्निद्रश्चन्द्रो वाऽऽगत्य धरणीसरणीरमृतसारणीभिरभिषिषेच[3]। किं बहुना। भवादृशां दर्शनमेव दारुणदुरितदारणम्[4]। सम्भाषणमेव निखिलोपनिषन्निषेव-

करिशावकः। निराकुलकवलनं यथेच्छग्रासः। कठोरः निष्ठुराङ्गः। कण्ठीरवः सिंहः।

प्रायेण बाहुल्येन।

विजयव्याजेन प्रस्थानच्छलेन। राजीवजन्मा ब्रह्मा। सन्मार्गस्य सत्पथस्य। उपदेशाय प्रदर्शनाय। अस्मै प्रस्तुतदेशाय। प्रा (समा?) जिहीते स्म प्रस्थितवान्।

उन्निद्रः उदितः। सरणी पद्वी। अमृतसारणीभिः पीयूषनालिकाभिः। सारणी धरा वा। अभिषिञ्चति। 'षिचिर् चरणे' इति। इदन्त्वाशुम्।

उपनिषद् वेदभेदः।

---

१ 'प्रसङ्गाद्गङ्गाप्रवाह इव प्रावर्त्तत' B.

२ 'राजवन्मानसंका(मा?)र्गोपदेशांय देशायास्मै' (?) B.

३ 'रभिषिञ्चति' B., 'रभिषिषिञ्च' D.

४ 'दारुणम्' B

णाम्। स्पर्श एव स्पर्शाश्मलाभः। शुश्रूषैव ब्रह्मशुश्रूषा। सन्निधानमेव[1] सन्निधानम्। समाराधनमेव धनम्। तदद्य निरवद्यं दिनम्। तिथिरतिथिः[2]श्रेयान्मुहूर्तः समपद्यत। मातापित्रोः पवित्रोऽन्वयः प्रतिष्ठानिष्ठामवाप। नित्यकृत्यानि[3] कृतकृत्यानि। नित्याभ्युदयभाजो वयम्। यद्यपि कृपामृतस्पृशा दृशा भृशं कृताः कृतार्थास्तथापि वाचालता वाचालताकाण्डमकाण्डं ताण्डवयति। भगवन्! परित्यागादकृशक्लेशः कतमो देशः कृतः। स्वच्छन्दमागच्छद्भिरच्छधीभिः के के वाऽऽश्रमा गतश्रमा

तत् स्पर्शाश्म यस्य स्पर्शेन सर्व्वे धातवः हिरण्मयतां प्रयान्ति।

तव शुश्रूषा सेवा ब्रह्मशुश्रूषा विधातुः निषेवणम्, वेदश्रवणेच्छा वा।

सन्निधानं सान्निध्यं, प्रशस्तधनं च।

अन्वयः वंशः। प्रतिष्ठा महत्त्वं तस्य निष्ठा काष्ठा।

वाचालता मुखरता। वाचालताकाण्डं वाग्लतानालम्।

'टापं चापि हलन्तानां क्षुधा वाचा दिशा गिरा।' इति। अकाण्डं अकस्मात्। ताण्डवयति नर्त्तयति।

अच्छधीभिः निर्म्मलज्ञानैः। विश्रमात् निवसनात्।

---

१ 'सन्निधानं स' B. २ 'श्रेयान्मूर्त्तः सुमुहूर्त्तः' B.
३ 'कृतकृत्या नित्या' B.

विश्रमादङ्क्रियन्त। क्वचिदुल्लाघापघनता घनतामातनोति बहुश्रेयसाम्[1]। अत्र पवित्रचरित्रैरयं कियन्ति दिनानि यावदावसथः सनाथः[2] क्रियते। कियन्त्यहानि[3] पुण्यहानिरहितैरिहातिवाहनीयानि माननीयैः। क्व वा यियासाऽऽयासातिशयदायिनी। भगवन्तः कियन्तः श्रीमतामन्तिके स्नानामृतस्नातकाः[4] प्रतिनिवसन्ति। निषिद्धविहङ्गजनाधिकरणं किमधिकरणं

क्वचित् प्रश्ने। उल्लाघः निर्गतः गदात्। अपघनं अङ्गम्। घनतां नैविड्यम्।

आवसथः आवासः।

अतिवाहनीयानि प्रापणीयानि।

यियासा गमनेच्छा। आयासातिशयदायिनी अतिशयखेदकारिणी।

स्नानं एव अमृतं जलं तेन स्नाताः एव स्नातकाः। स्वार्थे कः। स्नातकाः त्रिसन्ध्यस्नायिनः व्रतिनः। तथा च— 'स्नातकस्नातव्रती।' कति कियन्तः। सन्तः साधवः।

विहङ्गजनः नास्तिकलोकः। अधिकरणं अधिकारः, अधि-

१ 'घनत्वमातनोति। अत्र' B. २ 'सनाथीक्रियते' B.

३ 'कियन्त्यहानि वा पुण्य' B.

४ 'मृतस्नातकाः स्नातकाः कति प्रतिवसन्ति सन्निधौ' B.

व्याख्यायते विख्यातख्यातिवादैः श्रीपादैः। कियत्सङ्ख्याः सङ्ख्यावन्तः श्रोत्रियाः श्रोतारः। प्रशस्तसमस्त-पुस्तकसङ्ग्रहोऽस्ति न समस्ति वा। सन्न्यासात्प्रागेव गेयचरितैरधिजगे खगेन्द्रवाहनावाहनाऽमलमतिभिः। उत सन्न्यस्य 'गुणराशि[1]भिः प्रथमाश्रमादेव देवता-वतारैः सन्न्यस्तम्। अथ[2] पृथुलश्रमाद्द्वितीयाश्रमात्। विश्वाभयदानदक्षदक्षिणहस्तानां सन्न्यस्तानां काको-दरनायकोदरसुन्दरामोदरहढाश्लेषोल्लासितरमास्यानि

करणपन्यस्य। ख्यातिवादैः ख्यातिपत्तकवादिभिः। प्रसिद्धैर्वा। श्रीपादैः कृतसन्न्यासैः।

सङ्ख्यावन्तः पण्डिताः। श्रोत्रियाः वेदश्रुताः।

न समस्ति न सम्यक् अस्ति।

गेयचरितैः प्रशंस्यचरितैः। अधिजगे पठितम्। खगेन्द्रवाहनः कृष्णः। आवाहनं तत्सपर्य्या।

उत पक्षान्तरे। सन्न्यस्य सन्न्यासं कृत्वा। प्रथमाश्रमात् [ब्रह्मचर्यात् ?]।

द्वितीयाश्रमात् गार्हस्थ्यात्। प्रभूतश्रमात् महाखेदात्।

काकोदरः सर्प्पः तस्य नायकः शेषनागः। उदरशब्देनाच

---

१ 'पुण्यराशिभिः' B. २ 'अथवा पृथुलश्रमाद्द्वितो' B.

कति चातुर्मास्यानि। सम्प्रति निःप्रतिमप्रभ वन्नात-सुरगुरवः श्रीगुरवः कस्मिन्नुपवर्त्तने वर्त्तन्ते। कियतो यतीश्वराणामजनि जनितः प्रभृति विमला वर्षमाला। अद्य वन्द्यपादानां साधुमाधुकरी भिक्षा पीयूषकक्षा-मनूचानचयगृहेषु यद्दीष्यति, किमु कस्यापि भाग्य-भाजो भवने भवनेपथ्यभूताभिख्या[1] भविष्यत्ये-कभिक्षा।

राचमाचमुपस्थितम्। रमा लक्ष्मीः, तस्याः आस्यं मुखम्। कति कियत्परिमाणानि। चातुर्मास्यानि वार्षिकव्रतानि।

उपवर्त्तने देशे। वर्त्तने जीवनोपाये।

यतीश्वराणां सन्न्यासिश्रेष्ठानाम्। जनितः प्रभृति जन्मादितः। वर्षमाला वत्सरश्रेणी।

प्रतिपद्मं मधुकराः इव प्रतिगृहं श्रोत्रियाणां यतय यां कामयन्ते सा माधुकरी भिक्षा। पीयूषकक्षां अमृततमातृल्यम्। अनूचानाः साङ्गवेदाध्येतारः। भवने गृहे। भवनेपथ्यभूता अलङ्कारकरूपा। प्रभूताभिख्या प्रचुरा शोभा। 'अभिख्या नामशोभयोः'। इत्यमरः। प्रभूता भवेतिपाठे एकभिक्षेति विशेषणं भिक्षायाः। एकं एकवारं भिक्षा याचनं यस्याः सा तथेत्यर्थः।

---

[1] 'भूताऽभिख्या भवि' B.

अन्यच्च, श्रीमतां[1] वेदान्ते वेदान्तेवासिप्रसिद्धिभिरेव जनो भगवन्महिमानम्। मीमांसां[2] निस्सीमां साम्प्रतं प्रतिपद्यामहे महेच्छानाम्। भवदुपन्यासाद्विहित-कणादानुवादा अक्षपादानुवर्त्तिन्यो विद्याः प्रसिद्ध-बौद्धप्रयुक्तकृततर्ककर्कशशरेभ्यो न बिभ्यतीत्यभ्यर्हिताः प्रकाममामनन्ति। साङ्ख्ये [3]त्वसङ्ख्येयसङ्ख्यावत्सङ्ख्ये मुख्य-

वेदान्ते वेदान्तदर्शने। वेद जानाति। अन्तेवासिनां शिष्याणाम्। प्रसिद्धिभिः।

मीमांसा जैमिनिमुनिप्रोक्तशास्त्रम्। निस्सीमां निरवधिभूताम्। साम्प्रतं इदानीम्। प्रतिपद्यामहे जानीमः।

विहितः कणादस्य कणादमुनिप्रोक्तस्य वैशेषिकदर्शनस्य अनुवादः अनुकारः याभिः ताः तथा। न्यायसमानतन्त्रं वैशेषिकदर्शनमिति प्रसिद्धमेव। अक्षपादानुवर्त्तिन्यः विद्याः न्यायशास्त्राणि। न बिभ्यति न भयन्ते इत्यतः कारणात्, अभ्यर्हिताः पूजिताः। अर्थात्तथैव विद्याः जनाः यथेष्टं आमनन्ति सम्यक् आमन्यन्ते।

साङ्ख्ये कपिलमुनिप्रोक्ते शास्त्रे। असङ्ख्येयानां सङ्ख्यावतां

१ 'श्रीमन्तो वेदान्ते वेदायन्ते वेदान्तेवासिप्रसिद्धैरेव' B.

२ 'मीमांसामसीमां' B. ३ 'साङ्ख्येऽसङ्ख्येय' B.

तया लिख्यन्ते[1] लेखैरपि युष्मादृशाः। आपातप्राञ्जल-पातञ्जलजलधिरञ्जलिना कलितः कलितमोहारिभिः। गुणानां[2] साहित्यं साहित्यमादधाति धातृतुल्यानाम्। तत्तद्रसप्रसवित्वं कवित्वं बिभर्त्ति कीर्त्तिमतामित्यनुशुश्रुम। अतएव युष्माभिरनूष्माभिषङ्गैः समं सविस्मयाः समगंस्महीत्यभिहिते विहितयथोचितानु-

पण्डितानां, सङ्ख्यायां सम्यक् कथने गणनायां वा। मुख्यतया श्रेष्ठतया। लेखैः देवैरपि भवन्तः लिख्यन्ते।

आपातप्राञ्जलः अविचारतः सुगमः। पातञ्जलं शास्त्रं षष्ठं दर्शनं तदेव जलधिः। कलितः गृहीतः। कलितमोहारिभिः। कलिजन्याज्ञानध्वंसकैः।

साहित्यं सङ्गतः। साहित्यं काव्यादि।

तत्तत् प्रसिद्धम्। रसप्रसवित्वं रसजनकत्वम्। कवित्वं कर्त्तृ। बिभर्त्ति।

ऊष्मा गर्व्वः, तस्मात् यत् अभिषङ्गः अभिभवः तद्रहितैः। समगंस्महि सङ्गताः स्म। विहितयथोचितानुवादे दत्तोत्तरानुरूपप्रत्युत्तरे। सप्रसादे प्रसन्ने। प्रसादे सद्याभिमनि। तदनु

१ 'लिख्यन्ते युष्मादृशाः' B.

२ 'गुणसाहित्यं च साहित्यं न दधाति' B.

वादे [1]प्रदक्षिणाचरणप्रणामादिना सप्रसादे प्रसादे तदनु तदनुज्ञया ततस्तीव्रमाव्राजिष्म ॥

इति [2]तृतीयस्तबके भगवद्दीरणं नाम तृतीयं कुसुमम् ॥ ३ ॥

---

तस्यानन्तरम्। तदनुज्ञया तस्याज्ञया। ततः तस्मात् स्थानात्। तीव्रं शीघ्रम्। आव्राजिष्म आगताः स्म।

इति तृतीये तृतीयं कुसुमम् ॥ ३ ॥

---

१ 'प्रदक्षिणाचरणाचरणप्रणामादिना संप्रसादे तदनुज्ञया' B.

२ 'तृतीयकथास्तबके भगवदाभाषणं नाम' B.

अथ दक्षिणेन क्षोणीपतिमार्गं भार्गवमिव परशु-भोल्लासितम्। अमृतसम्भारमिव कुण्डलसल्लक्ष्मीकम्। वशिष्ठमिव वशिश्रेष्ठम्। पराशरमिव पराशयज्ञम्। वेदव्यासमिव वेदव्यासक्तम्। [१]शुकमिवाशुकलितपरमार्थम्। दुर्वाससमिव दुर्वासनाशून्यम्। जमदग्निमिवा[२]नमदग्नितेजसम्। [३]गर्गमिव भर्गभाजम्।

दक्षिणेन क्षोणीपतिमार्गं राजवर्त्मना दक्षिणभागं ब्राह्मण-मुपागम्य इदं अत्रादिषम् इत्यन्वयः। मार्गं इति 'एनपा द्वितीया' २।३।३१ इति द्वितीया। भार्गवं परशुरामम्। परेषां शुभया उल्लासितम्। परशोः परश्वधस्य भा दीप्तिः तया उल्लासितं च।

कुण्डलाभ्यां सन् लक्ष्मीः यस्य तं तथा। पक्षे कुण्डे लसन्ती लक्ष्मीः यस्य।

वशिश्रेष्ठं जितेन्द्रियश्रेष्ठम्। पराशयज्ञं परेषां अभिप्रायविदम्।

वेदे व्यासक्तं अनुरक्तम्।

आशु शीघ्रं कलितपरमार्थं प्राप्ततत्त्वज्ञानम्।

आनमदग्नितेजसं आनमत् नम्रीभूतं अग्नेरपि तेजः यतः तं तथा।

भर्गभाजं शिवभक्तम्।

---

१ 'मिव(वा)शुकलित' B. २ 'दमदग्नितेजसम्' A.
३ 'भार्गवमिव' B.

कश्यपमिवं [1]वश्यपरमेन्द्रियवर्गम् । गौतममिव [2]श्रौत-मतप्रवर्त्तकम् । विश्वामित्रमिव विश्वमित्रम् । अत्रिमिव मत्रिप्रवरम्[3] । क्रतुमिव क्रतुक्रियाकोविदम् । कुत्स-मिव अकुत्सचरितम् । वत्समिव वत्सलम् । जावालि-मिव जीवालिदयालुम् । त्रयीपथप्रथमपान्थम् । तरु-णायमानकरुणारसनिर्यासपीयूषवर्षिभिर्दृगञ्चलैरुदञ्च-

वश्यपरमेन्द्रियं स्वाधीनप्राणचक्षुरादिकम् ।
श्रौतमतं वेदविहितं कर्म्म तस्य प्रवर्त्तकम् ।
मत्रिप्रवरं श्रोत्रियश्रेष्ठम् ।
क्रतुक्रियाकोविदं यज्ञक्रियाभिज्ञम् ।
अकुत्सं अनिन्द्यं चरितं चरित्रं यस्य तं तथा ।
वत्सलं दयालुम् ।
त्रयीपथः वेदमार्गः ।

तरुणायमानः वर्द्धमानः करुणारसनिर्य्यासः आनन्दाश्रुप्रवाहः तदेव पीयूषं अमृतं तद्वर्षिभिः दृगञ्चलैः अपाङ्गैः उदञ्चयन्तं उद्गमयन्तं चन्द्रचक्रवालं इन्दुबिम्बम् ।

---

१ 'वश्यपवनेन्द्रियम्' B     २ 'शैवमतप्रवर्त्तकम्' B.
३ 'सत्रिवरम्' B.

यन्तमिव चन्द्रचक्रवालम् । ईषदुन्मिषद्दशनदीधितिच्छलेन स्वच्छमाशयं प्रकाशयन्तम् । उपमठपठदकुण्ठकण्ठवैकुण्ठभक्तविरक्तप्रव्यक्तोक्तसूक्तसंसक्तचेतसमूर्द्ध्वरेतसमजिह्मं 'ब्रह्मनिष्ठं ब्राह्मणं सम्यगुपागम्य[1] एतदवादिष्म ॥

श्रीमन्नमस्कुर्महे महेशमहसामत्रभवतां भवतां विहिततीर्थसार्थसञ्चरणौ चरणौ । भवांश्च[3] चतुराननोऽप्यनष्टश्रुतिः । पुरुषोत्तमोऽपि न मायावल्लभः ।

ईषत् अल्पं उन्मिषन्ती प्रभासमाना दशनदीधितिः दन्तच्छटा तच्छलेन स्वच्छं शुभ्रं आशयं अन्तःकरणं प्रकाशयन्तम् ।

उपमठं मठसमीपे । अकुण्ठः अमन्दः । वैकुण्ठभक्ताः वैष्णवाः । विरक्ताः निर्विलाः । सूक्तं शोभनं उक्तं स्तवादि । ऊर्द्ध्वरेतसं योगिनम् । अजिह्मं [ब्रह्म]निष्ठं अद्वैतपरम् ।

[महेशमहसां]महेशस्य महः येषां ते तथा । अत्रभवतां पूज्यानाम् ।

चतुराननः धाता वक्ता च । न अष्टमज्ञातकर्णः । अनष्टवेदश्च ।

पुरुषोत्तमः कृष्णः, पुरुषश्रेष्ठश्च । न मायावल्लभः न लक्ष्म्याः प्रियः । न कपटप्रियश्च ।

---

१ 'मजिह्मब्रह्मनिष्ठं, टीकाकारसम्मतः पाठः ।

२ 'मुपगम्येदमवादिष्म' B. ३ 'भवांश्चतुराननो' B.

[1]गिरिशोऽपि नास्थिरचितशोभः । ततो न कस्य नमस्यः । भवतः कलानिधेरनुपाधिरियं चातुरी, [2]यच्चतुरचन्द्रकान्ताननां[2]शुरोचितं वचनपीयूषं वर्षतीति निरवद्यालापपद्यामनुसरामः । एकः सातिरेकविवेकः केषां विदुषां परिषदि न गण्यसे पुण्यशेमुषीकः[3] ।

गिरीशः शिवः, गिरः वाण्याः ईशश्च ।

'गिरिशो गौरिशो वापि गिरीशश्च प्रकीर्त्तितः ।'

इति शब्दमहार्णवः ।

नास्थिरचितशोभः न अस्थ्ना कीकसेन रचितशोभः । न अस्थिरा चिता शोभा यस्येति च ।

भवतः तव । कलानिधेः चतुःषष्टिकलानिवासस्य, अथ च चन्द्रस्य । अनुपाधिः नैसर्गिकी । चातुरी चतुरता । इयं हि, चतुरः दक्षः, यच्चातुरो कर्त्री । चन्द्रकान्ताननस्रवोचितं चन्द्रवत् कान्तं यत् आननं तस्मात् स्रवणं निःसरणं तदुचितम् । अथ च चन्द्रकान्तः मणिभेदः तदाननस्रवोचितम् । वचनपीयूषं वागमृतं वर्षति । आलापपद्यां वाक्पद्वीम् ।

सातिरेकः सातिशयः ।

परिषदि गोष्ठ्याम् ।

---

१ 'गिरीशोऽपि' B. २ 'ननाऽतिसुरोचितं' B.

३ 'सेमुखीकः' B.

'आसीद्यास्मदीया दिदृक्षा प्रेक्षावन्तं भगवन्तं[१] प्रति सम्प्रति[२] सा पूर्णा। न किमप्यपेक्ष्यमपेक्षते। यदन-वद्यविद्याविद्युदुद्योतोद्द्योतितमेदिनीमण्डलानामवि-कलां[४] कलां कलयामः कुशलतां कुशलतां दधतां श्रीमताम्। तथापि मुदा सदाचारस्वच्छा पृच्छासौ विधीयते [५]भव्यमव्यवहितमव्याहतचित्तानाम्। कच्चि-दाचारचातुरीतुलितविरल[६]पुरुषरत्नानामियमेव नगरी गरीयसी, सदावदातभगवदवस्थानात्[७]। उत कुतो-ऽप्यागतं वतंसभूतैर्भूतलस्य। कियन्तः श्रीमतामि-

आदीया (?) अस्मदीया आद्या (?)। दिदृक्षा दर्शनेच्छा। प्रति लक्षीकृत्य। पूर्णापूर्णा अतिशयेन पूर्णा।

विद्या एव विद्युतः तस्याः उद्योतः प्रकाशः। अविकलां अप्रतिहताम्। कुशलतां दर्भलताम्।

पृच्छा प्रश्नः। भव्यं कुशलम्। अव्यवहितं व्यवधानशून्यम्। कच्चित् प्रश्ने। विरलं पुरातनम्। पुरुषरत्नं पुरुषश्रेष्ठम्। वतंसभूतैः भूषणरूपैः।

१ 'अद्य यावन्मदीया दिदृक्षा' B. २ 'भवन्तं' B.

३ 'सम्प्रति पूर्णा पूर्णालापक्रमपेक्षते। यद्यप्यनवद्य' B.

४ 'मविकलं कलयामः कुशलतां दय(ध)तां' B.

५ 'मव्यवहितचित्तानां' B. ६ 'चिरल' D.

७ 'भवदवस्थाना' B.

छत्राग्रहारा [1]धराग्रहाराः शालिशालिनः। [2]कश्चिद्वि-पश्चिद्यजमानो भवन्मानोचितो वर्त्तते कीर्तिमताम्। प्रतिग्रहं[2] प्रति ग्रहं जहति महति यत्ने महितमहि-मानः। गृह एव निगृहीतेन्द्रियग्रामैरव्यग्रमवस्थीयते। किं वा क्वापि कदापि [3]गम्यतेऽनवगम्यते जनैः। कस्मिन्नप्यवसरे नरेश्वरावासं [4]प्रति सम्प्रति यात्रा क्रियते न्यक्क्रियते वा तत्सम्बन्धः। कति प्रतिदिनं स्नानानि [5]सम्भवन्ति शुभवन्ति। माध्यन्दिनं कर्म निर्ममे

छत्राग्रहाराः छत्राणि। धराग्रहाराः पृथ्व्याः श्रेष्ठहाररूपाः शालिशालिनः कलमादियुक्ताः।

प्रतिग्रहं दानम्। प्रति लक्षीकृत्य। ग्रहं ग्रहणासक्तिम्। जहति त्यजन्ति। महितमहिमानः पूजितप्रभावाः।

निगृहीतेन्द्रियग्रामैः जितेन्द्रियवर्यैः।

न्यक्क्रियते दूरीक्रियते। तत्सम्बन्धः नरेश्वरावासयात्रासम्बन्धः।

शुभवन्ति शुभयुक्तानि।

१ 'धनाग्रहाराः' B. २ 'प्रतिग्रहं प्रतिग्रहं जहति यत्नेन' B.
३ 'गम्यतेऽगम्य' B. ४ 'प्रति यात्रा' B.
५ 'भवन्ति' B.

निर्ममे च्छितैः। भोजनमजनि रजनि[जानि]करनिकर[1]-निभशुभयशसाम्। उत[2] विचक्षणानां क्षणादुपरि परिस्थितिर्भविचौ भोजनस्य। [3]कस्मिन् वादिगिरि-विदारणदारुणकुलिशास्त्रे शास्त्रे मेदुरः स्फुरत्यादरो-दरोन्निद्रतामरसोदरसोदरनेत्राणाम्। [4]कापि व्याक्रि-यते व्याख्या। उत न व्याक्रियते किमपि। [5]प्रत्यक्ष-महं यथा भवदवलोकनादामोदमासादयामो[6] दया-मोदितमनोभिः सुमनोभिस्तथा विधेयम्। इत्य-

निर्ममे कृतम्। निर्ममेच्छितैः निर्ममत्वचेष्टितैः।

रजनिचरः चन्द्रः।

भविचौ भविष्यति।

कुलिशास्त्रे वज्ररूपास्त्रे। मेदुरः स्नेहनिबद्धः। दरोन्निद्र ईषद्विकसितं तामरसं पद्मं तस्य उदरपत्रं अन्तःस्थपत्री तस्याः सोदरं सदृशं नेत्रं येषां तेषां तथा।

व्याक्रियते वितन्यते।

महं उत्सवम्। आसादयामः प्राप्नुमः। दयामोदितमनोभिः कृपार्द्रहृदयैः। सुमनोभिः पण्डितैः। विधेयं करणीयम्।

१ 'रजनिजानिनिभशुभयशसाम्' B.

२ 'उत वचितक्षणादुपरि' B.

३ 'कस्मिन्'कस्मिन् वादिगिरिविदारणदारुणि शास्त्रे' B.

४ 'क्वापि न व्याक्रियते व्याख्या' B. ५ 'प्रत्यक्षमिह' B.

६ 'दवलोकनामासादयामो' B.

स्माकमाकर्ण्य कर्णरसायनं[1] वचनं तैरपि कपिल-
मुनिकल्पैरनल्पजल[2]धरध्वनिमधुरगम्भीरतारभारती[3]-
प्रतिशब्दमुखरितमन्दि(न्द ?)रोदरमिदमुदीरयामासे ।
सुचिरमपरिचयवशादसाम्प्रतं[4] साम्प्रतपौर्वापर्यविपर्य-
[5]योद्यदकस्मादस्माभिरधीयते । तत्र पवित्रगुणगरी-
[6]दूषणगणग्रहणाग्रहिलैर्न भाव्यं [7]भावव्यञ्जितमहित-
महिमभिर्महाशयैः । नयनयोरमितममृतद्रवं स्रवन्तः के
भवन्तः । अभिवादये [8]दयेन्दिरामन्दिरायमाणहृदया-

कर्णरसायनं श्रोत्राप्यायनम् । मन्दिरोदरं इति क्रिया-
विशेषणम् । उदीरयामासे उक्तम् ।

असाम्प्रतं अयोग्यम् ।

भावव्यञ्जितमहितमहिमभिः स्वप्रकाशेनैव व्यक्तीकृतपूजित-
महत्त्वैरित्यर्थः ।

अमितं अपरिमितम् ।

अभिवादये नमस्करोमि । दयेन्दिरा दया एव इन्दिरा
लक्ष्मीः । अनूष्मायिताम् अगर्व्विताम् ।

१ 'रसायनं तैरपि' B.
२ 'रनल्पजलजलधर' B.
३ 'गम्भीरभारती' B.
४ 'दसाम्प्रतं पौर्वापर्य' B.
५ 'यत्किञ्चिदकस्मा' B.
६ 'दूषणग्रहणाग्रहिलैर्भाव्यम्' B.
७ 'भाव्यं जितमहिमभि' B.
८ 'दयेन्दिरासनायमानहृ' B.

रविन्दाम्बुष्मानमनूष्मायितान्। सम्यगागम्यतां नितान्तपवित्रचरित्रैः। इहोपविश्यतां दृश्यतां दधानैर्गुणनिधानैः। सर्वतः शर्म [1]स्वधर्मनिर्मलमनसां सुमनसाम्। कुतः कुतर्कसम्पर्करहितैरिहायातम्। [2]गृहादिहागम्यतेऽगम्यते भोभिः श्रीमद्भिः, उत कुतश्चिद्विपश्चिद्वरेण्यैरन्यतः। अत्रागमनेनायं ग्रामो गुणग्रामोचितः[3] कदा विरचितः परिचितकलाकलापैर्मधुरालापैः। किं नाम नाम निकामनिर्मलमतीनाम्। विहितविद्वज्जनवृजिननिर्वासः[4] क्व वासः कृतः कृतज्ञैः। अयं संवसथः सनाथः कियन्ति वासराणि करणीयः। किं किमधीतं सुधीभिः। किं किञ्चन[5] पुस्तकमस्ति स्वस्तिमताम्।

दृश्यतां मनोज्ञताम्।

शर्म सुखम्।

विपश्चिद्वरेण्यैः पण्डितश्रेष्ठैः।

नाम सम्भावनायाम्। नाम संज्ञा च।

वृजिननिर्वासः पापनिराकरणम्।

संवसथः वासः।

१ 'स्वधर्मकर्मनिर्मलमनसा' B.

२ 'गृहादागम्यतेऽगम्यते भोभिर्वत' B.

३ 'ग्रामोपचितः' B. ४ 'निर्वासोऽद्य वासः क्व कृतः' B.

५ 'किं किं च' B.

निर्मितामितखेदच्छेदः[1] को वेदः कोविदैः पठ्यते। का वा शाखा विशाखानुकल्पानाम्। को देशः पेशलप्रकृतीनाम्। अदृष्याः पोष्याः कति सन्ति भवताम्[2]। कति भार्या आर्याणाम्। [3]बहवः पुत्राः, किं द्वित्रा एव देवकल्पानाम्। कियत्यः कन्या विश्वाधिकन्यायभाजाम्। जनयित्रीजनकौ [4]जनकौतुकदायिचरित्रौ किमासाते, वसाते वा कीर्तिश्लेषपटं निष्कपटम्। इयन्ति दिनानि यावदावयोः किमिति दर्शनजनिर्नाजनि। [5]अयाचितं भृशं बलं शम्बलं किञ्चनाऽस्ति

शाखा वेदशाखा, काण्व-कुथुमि-माध्यन्दिनादि। विशाखः कार्त्तिकेयः। तदनुकल्पानां तत्सदृशानाम्।

द्वौ वा त्रयो वा इति द्वित्राः।

जनयित्रीजनकौ मातापितरौ। आसाते विद्येते। वसाते परिदधाते वा। कीर्त्तिश्लेषः एव पटं।

दर्शनजनिः दर्शनप्रसङ्गः।

भृशं बलं महद्बलम्, तेजःस्वरूपम्। किञ्चन किञ्चित्।

१ 'मितकर्मच्छेदः को वेदः कोविदैः पठ्यते' B.

२ 'भवतां सुभवताम्' B.

३ 'भवतः पुत्राः किं द्वित्रा एक एव वा देवकल्पः' B.

४ 'जनकौ कौतुकदायिचरितौ किमावभेद्ये वसाते' B.

५ 'अयाचिता भृशं' B.

नास्ति च। कथं निर्वाहो हव्यवाहोपमतीव्रतेजसां बोभवतीति भवभीतिजुषां विदुषाम्। नित्यं कर्म हर्म्य एव निर्मीयते निर्मलमनोभिः। अथवा पुष्कल-पुष्करे[1] पुष्करिणीतटे। एकवारमाहारः सारभूतः प्रभूताज्यः प्राज्यव्यञ्जनो भवति भवतां द्विर्वा। प्रथमं सन्तर्पितनभोजनं[2] भोजनं कियत्यां वेलायां सम्पनी-पद्यते। अत्र मैत्री धात्रीदिविषदां केन केन समम्। समन्ततो विशदपदकदम्बबन्धोपसंस्कृतं[3] संस्कृतं श्रीमतां श्रुतमेव स्वच्छन्दममन्दच्छन्दः[4]सन्दानितनितान्तकान्त-

बोभवतीति पुनः पुनः भवति। वः युष्माकम्। भव-भीतिजुषां संसारीति कृत्वा भयं प्राप्तवताम्।

पुष्कलपुष्करे बहुलपद्मयुक्ते।

प्रभूताज्यः प्रचुरघृतः। प्राज्यव्यञ्जनः। भूरितेमनः। द्विर्वा वारद्वयम्।

नभोजनः देवजनः। सम्पनीपद्यते भृशं सम्पन्नो भवति।

मैत्री मित्रता। धात्रीदिविषदां ब्राह्मणानाम्। छन्दः स्रग्धरादि, रज्जुभेदश्च। सन्दानिता बद्धा। गौः वाणी, पशुश्च।

१ 'पुष्करेषु पुष्करिणीतटेषु' B.

२ 'सन्तर्प्पिते सन्तर्प्याणां भोजनं' B.

३ 'सम्बन्धोपस्कृतं श्रीमतां' B.

४ 'च्छन्दःसम्पदातिपातितिनितान्त' B.

कविताकान्तारे गौश्चरति । आत्मकृतिः कृतिवरैः सापि[1] पठ्यताम् । [2]अव्यग्रसमग्रगुणग्रामैर्ग्रामान्तरं गतमासीत् क्ष्मामौमन्तमणिभिः । अथवाऽचैवास्थायि स्थायिकीर्त्तिभिः । कियन्ति तीर्थानि प्रज्ञाऽवज्ञात-गीर्वाणगुरुभिरभिवीक्षितानि । कियन्ति वाऽतिमात्र-पवित्रया यात्रया निर्दम्भैः सम्भावनीयानि । भवतां भक्तिः शीतकिरणाभरणे भृङ्गिणमवगणयति । किमुत कौस्तुभभूषणे[3] विभीषणं विशेषयति । सम्प्रति प्रति-भाजुषां जिगमिषेव[4] लक्ष्यते [5]बलवलक्षयशसाम् ।

आत्मकृतिः स्वकरणं, कवित्वादि ।

क्ष्मामौमन्तमणिभिः पृथ्व्याः भूषणरूपैः इत्यर्थः ।

अस्थायि स्थितम् । स्थायिकीर्त्तिभिः अविनष्टयशोभिः ।

अतिमात्रं अतिशयम् ।

शीतकिरणाभरणे महादेवे । भृङ्गिणं भृङ्गरीटनामानं शिवानुचरम् । अवगणयति तिरस्करोति ।

विभीषणं राक्षसेश्वरम् । विशेषयति जयति । मद्भूयतीति यावत् ।

बलवलक्षं बलभद्रवत् शुक्लम् ।

१ 'कापि' B. २ 'अव्यग्र व्य(?)ग्र' B.

३ 'विभूषणे' B. ४ 'जिगमिषैव' B.

५ 'बलक्षयशसाम्' B.

अस्मन्मनीषितमखिलमेव सम्पूर्णमासीत्पौर्णमासीहि-मांशुमांसलकीर्त्तिमतां भवतामवलोकनेन, इति निःप्रतिममतिभिरभिहिते यथाप्रश्नं लोकोत्तरैरुत्तरैरनुमोद्याभिवाद्य च[1] वाद्यवेक्षणाकाङ्क्षया निरगामि, समागामि[2] च स्वामिसमीक्षणप्रतिक्षणविजृम्भमाणकल्याणभरैरस्माभिः॥

इति [3]तृतीयस्तवके विप्रसम्भाषणं नाम चतुर्थं कुसुमम्॥ ४॥

---

मनीषितं मनोरथः। मांसलः महान्। यथाप्रश्नं प्रश्नं अनतिक्रम्य। लोकोत्तरैः लोके प्रधानैः। उत्तरैः प्रतिवचनैः। अनुमोद्य अनु पश्चात् मोदयित्वा। अभिवाद्य नमस्कृत्य। वाद्यवेक्षणाकाङ्क्षया वादिनः अवेक्षणवाञ्छया। निरगामि निर्गतम्। समागामि सङ्गत च॥

इति श्रीसूर्य्यकविराजविरचितायां बालबोधिकायां कविकल्पलताटीकायां तृतीये स्तवके चतुर्थं कुसुमम्॥ ४॥

१ 'भिवाद्य चेक्षणाका' B.

२ 'समगामि च' A. C., 'समागामि स्वा' B.

३ 'तृतीये कथास्तवके ब्राह्मणाभाषणं नाम चतुर्थं कुसुमं समाप्तमिति।' B.

अथ क्वचित्कुवलयावलीमिलितपुण्डरीकखण्ड[1](ण्ड?) व्याजविजृम्भमाणप्रयागपरभागं तडागं [2]साकाङ्क्षमीक्षमाणाः, कुत्रापि करकमलकलितजलधौतकलधौतकलशकल्लविलासधरपयोधरभरावनम्रकम्रनागरीगणीयःस्वेदच्छेदमेदस्विनीर[3]समीरसमीहितसमीपां वापीं नेत्रपात्रीकुर्वन्तः,[4] क्वापि कूपान् भूपानिव गुणिभ्यः पात्रेभ्यः पावनजीवनदायिनो निरन्तरं निरूपयन्तः, कुतश्चित्पार्वतीपतिपादपयोजपूजन[5]शुद्धाभिजननिवासनिर्वासिताऽशेषकल्मषोपसर्गं दुर्गं नयनमार्गं नयन्तः,

खण्डं समूहः। परभागः अन्यतः शोभा कलधौतं सुवर्णम्। कम्रः कमनीयः। मेदस्वी महान्। समीहितः अभिलषितः। नेत्रपात्रीकृतवन्त पश्यन्तः इत्यर्थः। गुणिभ्यः दाक्षिण्यशीलादिगुणवद्भ्यः, रज्जुयुक्तेभ्यश्च। पात्रेभ्यः घटीप्रभृतिभ्यः, दानार्हजनेभ्यश्च। पावनं पवित्रम्। जीवनं जीविकां जलं च निरूपयन्तः। पदपयोजं पदपद्मम्। अभिजनः वंशः। निर्व्वासितः निराकृतः। कलुषं पापम्। उपसर्गः उपद्रवादिः। दुर्गं दुर्गम-

१ 'खण्डव्याजव्याजृम्भमाण' B.

२ 'साकाङ्क्ष(मीक्ष)मीक्षमाणाः' B.

३ 'नीरसमीहित' B.

४ 'कृतवन्तः' B.

५ 'पूजनपयोजनशुद्धाभिजनजननिवास' B.

अपरत्र च[1] भवद्दक्षस्तटप्रतिभटहाटककपाटरचनास-
नाथं गोपुरं च परिचिन्वन्तः, अन्यत्र सुपर्वपर्वत-
गर्वसर्वङ्कषान्निभान् निभालयन्तः, इतरत्र जवविजित-
कुरङ्गान् तुरङ्गान् रङ्गगतान् नटानिव नृत्यतो वीक्ष्य[2]
वीक्षणयुगलं सफलयन्तः, [3]क्वचिद्ध्वजवल्लिवेल्लनोल्ला-
सितभास्वत्तुरङ्गमगमनानि भवनानि नयनमीनयो-
रानायतां[4] नयन्तः, क्वचन काञ्चनवर्णां कर्णान्तविभ्रा-

स्थानम्। प्रतिभटः समः। हाटकं सुवर्णम्। गोपुर पुर-
द्वारम्। परिचिन्वन्तः पश्यन्तः। सुपर्व्वपर्व्वतः सुमेरुः। गर्व्व-
सर्व्वङ्कषः गर्व्वस्य सम्यक् उन्मूलकः। इभान् हस्तिनः। निभा-
लयन्तः पश्यन्तः, भाललोचने धन्तः (यन्तः ?)। कुरङ्गाः हरिणभेदः।
रङ्गः नृत्यस्थानं, युद्धं च। ध्वजवल्ली पताका तस्याः वेल्लनं
कम्पनम्। उल्लासितः उत्क्षिप्तः। भास्वान् सूर्य्यः तस्य तुरङ्गः
वाहनः। भवनानि गृहाणि। नयनमीनयोः नयनमत्स्ययोः।
आनायतां जालताम्। नयन्तः प्रापयन्तः पश्यन्तः इत्यर्थः।
काञ्चन काञ्चित् अनिर्व्वचनीयाम् इत्यर्थः। लोचनाञ्चलः अपाङ्गम्।

१ 'अपरत्र या(भ)वद्दन्त' B. २ 'निरीक्ष(क्ष्य)' B.
३ 'कुत्रचिद्ध्वजवल्लिवेल्लनोल्लांयितभास्व' B.
४ 'मीनयो(:)राजीवनीयतां' B.

(आ?)न्तचारुलोचनाञ्चलां [1]चरणसिञ्जानमञ्जुमञ्जीर-
नाद(न)नेदीयसां हृदयमदयमपहरन्तीं[2] कामिनी-
मक्षिलक्षीकुर्वाणाः, निर्वाणाय निर्वाणाङ्गारलाघवं
द्राघयन्तः, वसुमतीसारं देववारं समासाद्य [3]माद्य-
दन्तःकरणाः समवर्त्तिष्महि ॥ अनन्तरं निरन्तरम[4]-
पक्रमन्निष्क्रामदनेकसेवकनिकायकायसम्बन्धं सनि[5]-
र्बन्धं परितः परिहरन्तः सन्तमस[6]राशिनाशि प्रचण्ड-

सिञ्जानः शब्दायमानः। मञ्जीरः नूपुरम्। नेदीयसां अन्तिक-
स्थानाम्। अदयं निर्द्दयं यथा स्यात्। अक्षिलक्षीकुर्व्वाणाः
पश्यन्तः। निर्व्वाणाय मुक्तये। निर्व्वाणाङ्गारलाघवं निर्व्वा-
तानललघुत्वम्। द्राघयन्तः दीर्घीकुर्व्वन्तः वर्द्धयन्तः इत्यर्थः।
देववारं राजद्वारम्। आसाद्य प्राप्य। माद्यदन्तःकरणाः हृष्य-
न्मानसाः। समवर्त्तिष्महि अभवाम।

निरन्तरं निबिडं यथा भवति। अपक्रमं एकदैव। निष्क्रा-
मन्तः निर्गच्छन्तः। सेवकाः राजभृत्याः तेषां निकायः समूहः।
सनिर्बन्धं सयत्नं यथा स्यात्। परितः सर्व्वतः। सन्तमसं

१ 'चरणसम्भरणासि' B.
२ 'हरन्तीमक्षिलक्षीकुर्वाणाः' B.
३ 'दान्तकरणाः' B.
४ 'निरन्तरमपक्रमपक्रामदनेक' B.
५ 'निर्बन्धं' B.
६ 'राशि[नाशि]प्रचण्ड' B.

मार्त्तण्डमण्डलसम्प्रकाशसंकाशं[1] देवसकाशमनायास-मायामिष्म॥ सम्प्रति च न कं प्रति[2] प्रतिभाविभासितवदनो वादी। आवर्जिताऽजर्जरकर्णकलशीकाः प्रेक्षावन्तः प्रतीक्षन्ते [3]चास्मदप्रह्वजिह्वाशुक्तिमुक्तां वाचोयुक्तिमुक्तावलीम्। तदचिरस्य निरस्य गर्वमेतस्य भगवतीं भारतीं कण्ठपीठाधिष्ठात्रीं[4] निर्माय

सर्व्वतः व्यापि ध्वान्तम्। 'अवसमन्धेभ्यस्तमसः' (५।४।७९।) इत्यच् समासान्तः। मार्त्तण्डः सूर्य्यः। सङ्काशं सदृशम्। देवसकाशं राजसान्निध्यम्। आयासिष्म आगताः स्म।

अजर्जरः अभग्नः। प्रेक्षावन्तः पण्डिताः। अप्रह्वाः अनम्राः। जिह्वैव शुक्तिः मुक्तास्फोटः ततः मुक्तां निःसृताम्।

तत् तस्मात्। अचिरस्य अचिरेणैव। निरस्य विनाश्य। एतस्य वादिनः। निर्म्माय कृत्वा। निर्म्मायं निष्कपटं यथा स्यात्। उपास्य संसेव्य। द्विपास्यं गणेशम्। अध्यवस्यामि

१ 'सप्रकाशप्रकोशसंकाशं' B.

२ 'प्रति वचनकं प्रति प्रतिभाविभासितवदवादि' B.

३ 'चाप्रह्व' B.

४ 'धिष्ठायिनीं निर्मायमुपास्य' B.

निर्माय्यमुपास्य च द्विपास्यमध्यवस्यामि पुरा पुराणपुरुषोत्तमस्य[1] देवस्य विचित्रां स्तोत्रावलीम् ॥

इति [2]तृतीयस्तबके तडागादिवर्णनं नाम पञ्चमं कुसुमम् ॥

---

रचयिष्यामि । पुरा पूर्व्वम् । 'अध्यवस्यामि' इति पुरायोगे भविष्यति लट् ।

पुराणपुरुषोपमस्य हरिसदृशस्य । देवस्य राज्ञः ।

इति श्रीसूर्य्यकविराजविरचितायां बालबोधिकायां तृतीये पञ्चमं कुसुमम् ॥ ५ ॥

---

१ 'पुरुषोपमस्य' B.    २ 'इति तृतीये कथास्तबके' B.

इत्यादिवादिमाध्माय वचांस्युच्चार्य धैर्यवान्।
प्रतीक्षेत विपक्षस्य भारतीं प्रातिकूलिकीम् ॥ १ ॥
ततः संरम्भसम्भारगम्भीरारम्भनिर्भराम्।
विपक्षं क्षिप्रमाक्षिप्य वाचमुच्चारयेदिमाम् ॥ २ ॥
यन्मया सह दुर्बुद्धे! वाग्युद्धं कर्त्तुमिच्छसि।
तत्पङ्गुः शृङ्गमुत्तुङ्गं मेरोरारोढुमिच्छसि ॥ ३ ॥
सुप्तसिंहसटाकृष्टिमष्टापदपदच्छिदाम्।
व्याघ्रं शीघ्रं समाघ्रातुं शशकः सन्समीहसे ॥ ४ ॥
शुकशावः शशादस्य चञ्चुं चुम्बितुमिच्छसि।
सर्पं[1]सदर्पमङ्घ्रिभ्यां निष्पेष्टुं दुष्ट! वाञ्छसि ॥ ५ ॥
मण्डूकखण्डतां[2] धत्से [3]कुपिते(तो) नागमंसदि।
श्रीखण्डखण्ड एरण्डः [4]सौरभ्यं तुच्छ सेवसे ॥ ६ ॥

(१) प्रातिकूलिकीं अननुकूलाम्।

(२) संरम्भः क्रोधः। क्षिप्रं शीघ्रम्।

(४) सटाः कन्धरालोमानि। अष्टापदः शरभः।

(५) शशादः श्येनः। चञ्चुः पक्षितुण्डम्।

(६) श्रीखण्डः चन्दनः। सौरभ्यं सौगन्ध्यम्। तुषे प्रस्न-
वसि। रुषे क्रोधाय। 'निषेवसे' इति च पाठः।

१ 'सुदर्पमंघ्रिभ्यां' B. २ 'खण्डनां' B.

३ 'कुत्सितो' B. ४ 'ससौरभ्यं तुषे रुषे' B. A.

सम्प्रहर्त्तुं विषाणाभ्यां शक्रेभं वृषभेच्छसि।
गिरिं पातयितुं दन्ती दन्ताभ्यामभिवाञ्छसि ॥ ७ ॥
दुर्बुद्धे! स्पर्द्धसे कीटः[1] प्रकटं कैटभारिणा।
आखुर्बिडालदशनानुत्पाटयितुमिच्छसि ॥ ८ ॥
इदं पाषाणदलनमन्धस्यालेख्यदर्शनम्।
मृगतृष्णाम्भसि स्नानं कृष्णाहिमुखचुम्बनम् ॥ ९ ॥
तुलया तोलनं मेरोः करेण स्थगनं रवेः।
खड्गधाराग्रसञ्चारः शिरसा गिरिभेदनम् ॥ १० ॥
नभसोऽङ्गुलिनिर्मानमयस्खण्डकचर्वणम्।
अङ्गारशयनस्वापो मञ्जयोऽयं त्वयेष्यते ॥ ११ ॥

(७) विषाणाभ्यां शृङ्गाभ्याम्। शक्रेभं ऐरावणम्।
(८) कैटभारिणा विष्णुना। आखुः मूषिकः।
(९) आलेख्यं चित्रम्। मृगतृष्णा मरीचिका। कृष्णाहिः कालसर्पः।
(१०) तुलया तुलादण्डेन। तोलनं परिमाणं उत्तोलनम्। स्थगनं आच्छादनम्।
(११) मानं परिमाणम्। अयस्खण्डकः लौहकलायः*। शयनं

१ 'कीट' B.

* 'खण्डो हरिमन्थकः' इत्यमरोक्तेः 'कलायः' इति कल्पनमयुक्तम्। कलायस्तु लोकख्यात-मटरवाचकसतीनकापरपर्यायः। 'कलायस्तु सतीनकः'। 'हरेणुरेणुकौ' इत्यमरः।

| Size. | Contents. | Per unit of 96 or 100 pages. |
|---|---|---|
| Demy octavo .. | Oriental text only .. .. | Rs. 0-12-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | „ 1-0-0 |
| Royal octavo .. | Oriental text only .. .. | „ 1-0-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | „ 1-4-0 |
| Quarto | Oriental text only .. .. | „ 2-0-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | „ 2-8-0 |

There are some exceptions to this scale, which in each case will be indicated in the price lists. For the caloulation of prices each part of a unit in excess of the 96 or 100 pages counts again as a full unit.

Single issues may be bought separately, but three years after the completion of a work no complete sets are broken for the sale of loose component parts.

Each issue bears, besides its issue number, a fascicle number indicating its place in the work and volume to which it belongs.

**With the issue of this Notice all previous prices and price lists are cancelled.**

CALCUTTA,
*December*, 1923.

The publications or information about them are obtainable from the Asiatic Society of Bengal, No. 1, Park Street, Calcutta, or from the Society's Agents:—

MESSRS. LUZAC & Co., 46, Great Russell Street, London, W.C.

M. PAUL GEUTHNER, 13, Rue Jacob, Paris, VI[e].

BUCHHANDLUNG OTTO HARRASSOWITZ, 14, Querstrasse, Leipzig.

*Residents of Europe should order from the Agents.*

When ordering direct from the Society the following rules should be observed:—

Orders should be addressed to the Asiatic Society of Bengal and not to any Official by name or title.

All Cheques, Money Orders, etc., should be made payable to the "Treasurer, Asiatic Society of Bengal."

Orders for books should be accompanied by a full name and address, legibly written, and should be sent on a separate sheet of paper containing no other communication.

In India books are supplied by V.-P.P.

# LIST OF WORKS ON RHETORIC AND DRAMATURGY

### PUBLISHED IN

## THE BIBLIOTHECA INDICA.

---

### Work No. 36.

1. DAŚARŪPA, by Dhanañjaya, with Dhanika's commentary. Ed. F. E. Hall. 1861–1865. Complete. 3 fascicles. Fasc. III only available @ Re. 0-12-0.

### Work No. 221.

2. KAVIKALPALATĀ, by Deveśvara, with his own commentary. Ed Śarat Candra Śāstrī. 1913–..... 2 fascicles. Re. 0-12-0 each.

### Work No. 40.

3. KĀVYĀDARŚA, by Daṇḍin. Ed. Premcānd Tarkavāgīśa. 1862–1863. Complete. 5 fascicles, all sold out.

### Work No. 9.

4. SĀHITYA-DARPAṆA, by V[illegible]nātha Kavirāja. Text and trans. by R Ballantyne and [illegible]madādāsa Mitra. Text 1850–1851, trans 1850–1875. Complete. 5 + 4 fascicles. Text completely sold out; trans. only fascs. III and IV available @ Re. 1-0-0 and Rs. 2-0-0 respectively.